वर्णाश्रमधर्म इत्युक्ते वर्णविशेषेण सह यत्राश्रमविशेषस्य सम्बन्धः स एव । अर्थाद् ब्राह्मणस्य पलाशादिदण्डधारणरूपो यो धर्मः ।

गुणधर्मपदेन शास्त्रीयाभिषेकसन्धिविग्रहादिगुणाभियुक्तस्य राज्ञः प्रजापरिपालनरूपो यो धर्मः स उच्यते । अर्थात् राजधर्म इति । न तु यस्य कस्यचन क्षत्रियस्य, तस्य वर्णधर्मत्वात् ।

निमित्तधर्म इति पदेन प्रायश्चित्तमित्युच्यते । निमित्तं नाम पापं तदुद्दिश्य कर्म तद्धर्मत्वेनोच्यते । पापानां बाहुल्यात् प्रायश्चित्तान्यपि बहूनि सन्ति । एनस्सु गुरुषु गुरूणि लघुषु लघुनि गौतमवचनानुमापतारतम्यात् प्रायश्चित्ततारतम्यं वेदितव्यम् । एतद् विषयोक्ता धर्मो निमित्तधर्मपदेनोच्यन्ते । मा हिंस्यात् सर्वा भूतानि इति आचाण्डालब्राह्मणानां साधारणो धर्मः ।

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्[३७] ॥

इति मनुना धृत्यादीनाम् आचाण्डालब्राह्मणसाधारणधर्मत्वेन प्रत्यपादि। नायं धर्मो वर्णविशेषस्याश्रमविशेषस्य कृते उपदिष्टः, अपि तु सामान्येन वर्णाश्रमनिर्विशेषेण सर्वसाधारणधर्मरूपेण समुद्घोषितः । स्मृतेरपि धर्ममूलत्वमित्थं प्रतिपाद्यते यद् आदिकाव्ये [३८]रामायणे बालिप्रश्नं

---

वीतशोकभयो विप्रो ब्रह्मलोके महीयते ॥
अनेन विधिना सर्वास्त्यक्त्वा सङ्गाच्छनैः शनैः ।
सर्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥ -मनुस्मृतिः ६/३५,६२,८१ ।

वायुभक्षः प्रागुदीची गच्छेद्वाऽऽवर्ष्म संक्षयात् ॥
सिद्धे योगे त्यजन् देहममृतत्वाय कल्पते ।
अमृतत्वाय कल्पते ब्रह्मत्वप्राप्तये च प्रभवतीति ॥
-याज्ञवल्क्यस्मृति 'मिताक्षरा' ३/५५,२०३ ।

३७. मनुस्मृतिः ६/९२ ।

३८. राजभिः कृतदण्डासु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥

समादधतो रामचन्द्रस्य मुखेन मनुस्मृतेः श्लोकद्वयमुपन्यस्य स्मृतीनां प्रमाण्यमङ्गीकृतम् ।

आयुर्वेदज्योतिर्वेदावपि रोगग्रहपीडयोः कारणत्वेन पापमेव प्रदर्शयन्तो तयोरुपसमार्थं दानजपादिकृत्यमुपदिश्य धर्मप्रतिपादकं शास्त्रं सम्मानं कृतवन्तौ । धर्मेण सह नित्याविरोधमुपगतयोरपि अर्थकामयोः प्रतिपादके शास्त्रे धर्मशास्त्रस्यात्मनः सहायकत्वेन स्वीकुरुतः । तथा हि अर्थशास्त्रकारेण विष्णुगुप्तेन चाणक्येन प्रदर्शितं यत्-

व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति[३९] ॥

वर्णाश्रमाचारप्रशंसायां धर्ममाद्रियते ।

रक्षोहादिना वेदस्योपकारार्थं समवतीर्णं व्याकरणं वेदानुमापकस्य धर्मशास्त्रस्य सुरक्षकमेव प्रवक्तव्यमेव । पुनश्च [४०]महाभाष्यकारैः नैवेश्वर आज्ञापयति नाऽपि धर्मसूत्रकाराः पठन्ति । अपवादैरुपसर्गा बाध्यन्तामिति लिखित्वा धर्मशास्त्राणां सर्वमान्यत्वं प्रदर्शितम् ।

[४१]विहितकर्मजन्यो धर्म इति धर्मं लक्षयद्भिर्नैयायिकैः विहित-कर्मोपदेशकानां धर्मशास्त्राणां प्रमाण्यमङ्गीकृतमेव, वर्णाश्रमाचारविद्भै-र्हेतुवादिभिरपि प्रजापालनादौ स्वस्वत्वपरिरक्षणादौ च धर्मशस्त्रं नूनं समादरणीयमित्युक्तम् । साक्षाद्भगवतीश्रुतिरपि धर्मं प्रशंसति [४२]''धर्मो विश्वस्य जगतः प्रतिष्ठा'' इति । धर्मप्रशंसया तत्प्रतिपादकं शास्त्रमपि

यस्तु रज्जुं घटं कूपाद्धरेद्भिद्याच्च यः प्रपाम् ।
स दण्डं प्राप्नुयान् माषं तच्च तस्मिन् समाहरेत् ॥
-मनुस्मृतिः ८/३१८,३१९, किष्किन्ध्याकाण्डे १८/३३,३४ ।

३९. कौटलीयधर्मशास्त्रम् -१/३ ।

४०. पाणिनिसूत्रभाष्ये- १/१/४६ ।

४१. विहितकर्मजन्यो धर्मः, निषिद्धकर्मजन्यस्त्वधर्मः ॥ -तर्कसंग्रहः, पृ०-७१ ।

४२. धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपजीवन्ति ।
धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितम्, तस्माद्धर्मं परमं वदन्ति ॥
-तैत्तिरीय, आरण्यकम्- १०/६३ ।

प्रशंसितम् । धर्मार्थकाममोक्षार्थं संसारेऽस्मिन् जनाः सर्वदा आकुलिताः सन्तो वेदादिशास्त्रविहितानि यागादिकर्माण्यनुतिष्ठन्ति । प्रवृत्तिनिवृत्ति-धर्मौ वेदेषु प्रतिपादितौ । निवृत्तिविचारस्यावकाशाभावात् प्रवृत्तिविचारस्यावकाशसत्त्वात् तस्यैव [४३]श्रेणीविभागस्य समुत्पत्तिरुक्ता। एवंक्रमेण धर्मशास्त्रनिबन्धकारपर्यन्तमस्य व्यवस्थितस्वरूपमागतम् । वर्णानां विभागस्तु स्मृतेः पूर्वमेवासीदिति मनुस्मृत्यनुसारं विज्ञायते । आश्रमविभागस्तु यद्यपि प्राचीनकाले आसीत्, तथापि अस्य व्यवस्थितं रूपं तथा नासीत्, यथाऽधुना स्मृतावुपलभ्यते । आश्रमव्यवस्थानन्तरं वर्णधर्माणां समुचितोपयोगव्यवस्थाऽऽपतिता । अतो मनुः स्मृतिशास्त्रं तदानीमेव विरचितवान् । क्रमेण च आश्रमान् तथा तदधीनधर्मान् व्यवस्थापयामास । यदि वा याज्ञवल्कय-गौतम-वसिष्ठ-आपस्तम्ब-व्यासप्रभृतिस्मृतिकारेभ्योऽर्वाचीनस्तथापि तस्य समये [४४]वर्णाश्रम-धर्मव्यवस्थया सह इतरेषां धर्माणामव्यवस्था संघटिता येषां व्यवस्था संघटिता तेषां व्यवस्था तेन कृता । स्थलविशेषे येन पूर्ववर्त्तिसमाचरेण सह तस्यैक्यमत्यं न भवति । तत्र [४५]नैतन्मतमित्यादिना नाङ्गीकारोति । वसिष्ठोऽपि [४६]चतुर्णामाश्रमाणां परिगणनं कृतवान् । तस्य समये प्रायेण केचन धर्माः देशविशेषमाश्रित्यासन् । वर्णानां संसर्गेणान्येषां केषाञ्चन संकरजातिविशेषाणामुद्भवो लक्षितः कुलपरम्परया केषांचन धर्माणां स्थितिर्दृष्टा ।

मनुस्तदाचारस्थितानां धर्माणामुपलब्धवेदभागे स्थितिं प्राप्य तेषां स एव धर्मः इति व्यवस्थापयामास । कालान्तरे इयमेव चिन्ताऽभूत्

---

४३. भगवन् सर्ववर्णानां यथावदनुपूर्वशः ।
अन्तरप्रभवाणां च धर्मान्नो वक्तुमर्हसि ॥ -मनुस्मृतिः १/२ ।

४४. योगीश्वरं याज्ञवल्क्यं सम्पूज्य मुनयोऽब्रूवन् ।
वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः ॥ -याज्ञवल्क्यस्मृतिः १/१ ।

४५. यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
नैतन् मम मतं यस्मात् तत्रायं जायते स्वयम् ॥ -तत्रैव - १/५६ ।

४६. चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः । -वसिष्ठधर्मसूत्रम् ७/१ ।

यद् आचरितानां धर्माणामनुष्ठाने वेदेन सह यः साक्षाद् विरोधो न भवति, स एव धर्मो भवितुमर्हति । तेनैव श्रुतिकल्पनं भवितुं शक्यते । मनोर्भावमिमं गृहीत्वा [४७]गौतमव्यासादयोऽपि स्मृतिकारा वेदाविरुद्ध-देशजातिकुलाचाराणां धर्मे प्रामाणिकतास्त्येवेति स्वीचक्रुः । एवंप्रकारेण धर्माणां समुद्भावः कुलपरम्परया संघटितः, यस्य प्रभावः कालक्रमेणात्यन्तं प्रौढो जातः ।

धर्मशास्त्रसाहित्यं मुख्यतस्त्रिविधं भवति । स्मृतिसाहित्यं सूत्रसाहित्यं निबन्धसाहित्यञ्चेति । तत्र स्मृतीनां तथा सूत्राणां कालनिरूपणावसरे अनयोः कस्य प्राचीनत्वमिति निश्चेतुं विपश्चितः सर्वदा विवदन्ते । धर्मसूत्रकाराणां परिचयदानावसरे महामहोपाध्यायैः पाण्डुरङ्गवामनकाणेमहोदयैः सूत्रग्रन्थानां प्राथम्यं प्रदर्शितम् । तन्मते उत्तरवैदिककाले सूत्रग्रन्थानां रचना तथा कल्पशास्त्रस्याङ्गत्वेनास्य प्रामाण्यमासीत् । विष्णुमित्रेण [४८]ऋग्वेदस्य प्रातिशाख्ये कल्पस्यायमर्थः प्रत्यपादि यथा कल्पो वेदविहितानां कर्मणामनुपूर्वकेण कल्पनाशास्त्रमिति । ब्राह्मणग्रन्थेषु यंज्ञयागादीनां कर्मणां विधानं विस्तृतं तथा अव्यवस्थितं दृष्ट्वा एतान् व्यवस्थापयितुं कल्पसूत्रस्याविर्भावो जातः, तदपि कल्पसूत्रं व्यवहारसौकर्यार्थं चतुर्द्धा विभक्तम्- (१) श्रौतसूत्रम्, (२) गृह्यसूत्रम्, (३) धर्मसूत्रम्, (४) शुल्वसूत्रञ्चेति । श्रौतसूत्रं तदेव शास्त्रं भवति यस्मिन् शास्त्रे यागादीनां विधानमस्ति । ऋग्वेदस्य श्रौतसूत्रद्वयं भवति तदाश्वलायनश्रौतसूत्रं शांख्यायनश्रौतसूत्रञ्च । शुक्लयजुर्वेदस्य कात्यायनश्रौतसूत्रम् । तथा च कृष्णयजुर्वेदस्य बौधायनश्रौतसूत्रम्, आपस्तम्बश्रौत्रसूत्रम्, हिरण्यकेशीश्रौतसूत्रम्, भारद्वाजश्रौतसूत्रं चास्यन्तर्भुक्तं भवति ।

---

४७. (क) देशजातिकुलधर्म-आम्नयैरविरुद्धाः प्रमाणम् ।

- गौतमधर्मसूत्रम्- २/२ ।

(ख) देशजातिकुलानाञ्च धर्मज्ञोऽपि जनार्दनः ।

-महाभारते भीष्मपर्वः- ३/५६ ।

४८. ऋग्वेदे वर्गद्वयवृत्तिः, पृ०- १६ ।

सामवेदेन साकं लाट्यायनद्राह्यायणजैमिनीयश्रौतसूत्राणामन्तर्भावोऽस्ति। वैतायनश्रौतसूत्रस्यान्तर्भावो अथर्ववेदे भवति ।

**गृह्यसूत्रम्-** यस्मिन् शास्त्रे गृहाग्निना संस्काराणां तथा गृह्यकर्मणां विवेचनमस्ति, तदेव गऽह्यसूत्रम् । ऋग्वेदस्याश्वलायनशांख्यायनगृह्य-सूत्रद्वयं वभति । शुक्लयजुर्वेदस्य पारस्करगृह्यसूत्रम्, कृष्णयजुर्वेदस्य बौधायन-आपस्तम्ब-हिरण्यकेशी-भरद्वाजगृह्यसूत्रञ्च, सामवेदस्य गोभिलजैमिनीयगृह्यसूत्रद्वयम्, अथर्ववेदस्य कौशिकगृह्यसूत्रं भवति ।

**धर्मसूत्रम्-** आश्रमाणां तथा चतुर्णां वर्णानां कर्त्तव्याकर्त्तव्या-चारप्रायश्चित्तव्यवहारादिविषये विवेचनं यस्मिन् शास्त्रे सूत्ररूपेणोपलम्यते, तदेव धर्मसूत्रम् । धर्मसूत्रेण सह गृह्यसूत्रस्य सम्बन्धो नितरां दृश्यते । गृह्यसूत्रेषु गृहाग्नि-गृहयज्ञोपासना-हवन-संस्कार-स्नातकनियम-श्राद्धादीनां कर्मणां विचारः दृश्यते । धर्मसूत्रेषु गृह्यकर्मणोः विषये तथा विस्तृतं वर्णनं नोपलभ्यते । यतो हि अस्य विषयस्तु सुविशालः सुदीर्घश्च । अतः [४९]गृह्यसूत्र-धर्मसूत्रं कदाचिदेकमेव परिदृश्यते । [५०]कदाचिच्च गृह्यसूत्रं धर्मसूत्रं निर्देशमपि ददाति ।

धर्मसूत्रं वैदिकसाहित्यस्य महत्वपूर्णमङ्गत्वेन स्वीक्रियते । वेदस्य शाखानुसारं धर्मसूत्रमपि भवति । परन्तु तानि सर्वाणि धर्मसूत्राणि नैवोपलब्धानि भवन्ति । इदमांपे एकं विशिष्टं कारणमासीत् यत् तदानीं धर्मसूत्रस्य प्राधान्यं समस्तविशिष्टेषु कर्मसु संस्कारादिषु अनुभूतम् । तत्सर्वं कल्पसूत्रानुसारमासीत् । अतः प्रतिशाखां धर्मसूत्रस्य रचना न जाता । अस्मिन् विषये पूर्वमीमांसायां [५१]तन्त्रवार्त्तिकेऽपि विचारोऽस्ति।

---

४९. पलाशो दण्डो ब्राह्मणस्य ॥ -आपस्तम्बधर्मसूत्रं १/१/२/३८ । आपस्तम्बगृह्यसूत्रमपि समानं वदति । द्रष्टव्यम्, आपस्तम्बगृह्यसूत्रम्- ४/१७, १५/१६ ।

५०. मासिश्राद्धस्यापरपक्षो यथोपदेशं कालाः ॥ - आपस्तम्बगृह्यसूत्रः ८/२१/१ । आपस्तम्बधर्मसूत्रमपि समानं वदति । द्रष्टव्यम्, आपस्तम्बधर्मसूत्रः २/७/१६।

५१. तन्त्रवार्त्तिक पृ०- १७१, पूर्वमीमांसासूत्र- १/३/११ ।

धर्मसूत्राणां वैशिष्ट्यं सामाजिकजीवनस्याधारभूतमेवासीत् । मानवजीवनस्य प्रतिपदं चास्यावश्यकता नितरामस्ति । श्रौत्रसूत्रे यज्ञकरणाय उपनयनादिशुद्धसंस्कृतयज्ञोपवीतधारणपूर्वकं निर्द्देशो वर्त्तते। परन्तु उपनयनस्य यज्ञोपवीतधारणस्य प्रक्रिया तत्र नोपलभ्यते । अत एव सन्ध्यावन्दनादिकर्म तस्मादेव धर्मसूत्राद् विज्ञातं भवति । अपि च धर्मसूत्रं विना नान्यत्र कुत्रापि सूत्रग्रन्थेषु पतितानां शूद्राणाञ्च स्थितिविषये, वर्णानां कर्त्तव्याकर्त्तव्यविषये उल्लेखोऽस्ति ।

इदमेव धर्मशास्त्रं कालान्तरेषु त्रिधा विभक्तम् । स्मृतिविभागः, सूत्रविभागः, निबन्धविभागश्चेति । कालदृष्ट्या मन्वादिस्मृतेस्तथा सूत्रग्रन्थानां प्राथम्यं सर्वैः स्वीक्रियते । तदनन्तरं निबन्धग्रन्थानां स्थितिर्भवति ।

मूलस्मृतिग्रन्थानां च तेषां क्वचित् टीकारूपेण क्वचिद् वा भाष्यरूपेण क्वचिद्वा टीकायाः टिप्पणीरूपेण विरचिता ग्रन्था अपि धर्मशास्त्रेषु परिगणिता भवन्ति । पुनश्च निबन्धाख्यां भजमाना ग्रन्थविशेषा अपि अस्मिन् अन्तर्भूता भवन्ति । यथा कमलाकरविरचितनिर्णयसिन्धुः, जीमूतवाहनविरचितदायभागः, माधवाचार्यविरचितकालमाधवादयो ग्रन्थाः, एवम् अन्येऽपि ।

ते निबन्धकृतो विभिन्नेषु स्मृतिग्रन्थेषु उल्लिखितानां प्राकरणिकानां वचनानां सामञ्जस्य विधाने मुख्यतो यत्नपरा भवन्ति। विशेषतो निबन्धग्रन्थेषु विरुद्धमतानि पूर्वपक्षत्वेन स्वीकृत्य ग्रन्थकर्त्ता स्वकीयं मतं सिद्धान्तत्वेन स्वीकरोति । कुत्रचित् परमतानि खण्डितानि कृत्वा अनन्तरं स्वमतानुकूलरूपैर्वचोभिरुदाहृत्य स्वमतं स्थापयन्ति । कुत्रचिच्च केवलं परमतान्युट्टङ्क्य तद्धेयम्, तन्न समीचीनमित्यादि व्यङ्ग्योक्त्याक्षिप्य उदासीना भवन्ति, परन्तु निबन्धकर्त्तुः नैतत् समीचीनं कर्म । तस्मात् त एव निबन्धारः प्रतिष्ठां लभन्ते, ये परमतखण्डनानन्तरं स्वमतं विभिन्नैः प्रमाणिकवचोभिः परिपोष्य उपस्थाप्य सिद्धान्तं वदन्ति, इदं तावन्निबन्धग्रन्थानां वैशिष्ट्यमेव भवति । यतो हि ईदृशी तर्कणा तत्र तत्र स्मृतिसूत्रग्रन्थेषु नैवोपलभ्यते ।

एतेषामेव निबन्धग्रन्थमावश्यकतामुपादेयतां च सर्वे अनुभवन्ति, यदा परस्परविवादानामपि धर्मशास्त्रकाराणां मतानि निष्कर्षत्वं नाभजन्, तदा निबन्धकाराणामेव मतानुसारेण समाधातुं शक्यते ।

एकदशशताब्दीं यावद् बहवो भाष्यकारा विभिन्नेषु प्रख्यातेषु ग्रन्थेषु स्वकीयं बुद्धिवैभवं प्रकाशितवन्तः । यस्य यादृशी प्रज्ञा तादृशी च लोकप्रियता प्राप्ता । यतो हि व्याख्या बुद्धिबलापेक्षा भवति ।

अस्मिन्नेव निबन्धप्रवाहसमये विभिन्नेषु प्रान्तेषु राज्यान्तरेषु च शास्त्रान्तरेषु कृतभूरिपरिश्रमाः पण्डिताः बहून् निबन्धग्रन्थान् व्यरचितवन्तः । एते भारतीयसंस्कृतेः उन्नायकाः स्मृतिसूत्रनिबन्धकारा भारतीयजीवनस्य सुदीर्घकालादेव पथप्रदशका भवन्ति । देशस्यास्य धार्मिक-सामाजिक-नैतिकभावनाया विकाशार्थमेतेषामवतारभूतानां युगपुरुषाणां दानमविस्मरणीयमेव । धार्मिकदृष्ट्या अधुना भारतवर्षं धर्मस्य मूलपीठमिति सर्वे विश्ववासिनः स्वीकुर्वन्ति । येषां महानुभावानां सुचिन्तनेनायं देश आदर्शस्थानीयो जातः । स्वतन्त्रचिन्तनशक्तेः बृद्धिः व्यक्तित्वस्य विकाशः समाजस्य च मर्यादा जीवनस्य प्रतिसोपानं धर्मशास्त्रदृष्ट्या जीवननिर्वाह एव अस्माकं संस्कृतिः, सैव चास्माकं संजीवनीशक्तिः, यस्य देशस्य सदाचारः शिक्षा, संस्कृतिः, कला, भक्तिभावना, यागयज्ञादिपूजोपासना, मैत्री, प्रीतिः समग्रविश्वे सर्वश्रेष्ठा आसीत् । देशस्यास्य गौरवप्रतिपादनावसरे भगवता स्वायम्भूवेन मनुना प्रोद्घोषितं यत्-

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः[५२] ॥"

वचनेनानेन इदं तावद् विज्ञातं भवति भारतस्याध्यात्मिकी-स्थितिः सर्वोन्नताऽऽसीत् । यस्या आध्यात्मिकभावनायाः स्रोतस्विनी अद्यापि परम्परामावहति । विभिन्नैः यवनाङ्ग्लतस्करैः यद्यपि देशोऽयं

---

५२. मनुस्मृतिः- २/२० ।

शासितः, अपहृतश्च तथापि देशस्यास्य भारतवर्षस्य गौरवं नैव विनष्टम्। एतन्निमित्तम् अस्माकं प्राचीनानां युगपुरुषाणाम् ऋषीणामिद-मेवावदानमिति नास्ति तत्र काचिद्विप्रतिपत्तिः ।

धर्मशास्त्रीयनिबन्धकारेषु उत्कलीयानां निबन्धकाराणां नामानि धर्मशास्त्रइतिहासकारैः तथा नैव संस्मृतानि । यद्यपि उत्कलराज्ये प्राचीनकालादारभ्य अद्यावधि धर्मशास्त्रस्य महती चर्चा दरीदृश्यते । तस्य धर्मशास्त्रस्य प्रसाराय उत्कलीयनिबन्धारः बहव धर्मशास्त्रनिबन्धान विरचितवन्तः । तेषु सर्वत्र प्रसिद्धः विशिष्टज्योतिर्वित् धर्मशास्त्रेषु पारङ्गतशतानन्द-आचार्यः सर्वप्राचीनः । शतानन्दस्य त्रयग्रन्थाः सन्ति। यथा- शतानन्दसंग्रह, भास्वती, शतानन्दरत्नमाला चेति । एतेषां त्रयाणामपि, ग्रन्थानां प्रामाण्यं धर्मशास्त्रेषु तथा ज्योतिषग्रन्थेषु प्राप्यते। विशेषतः शतानन्दस्य भास्वती न केवलमुत्कले अपि तु समग्रस्य भारतवर्षस्य सुमूल्यं रत्नमिव परिगणिता भवति । अस्यां भास्वत्यामुपरि विंशतिटिकाः सञ्जाता इति हीरालालमहोदयेनोक्तम् । ततः शङ्खधरस्य धर्मशास्त्रनिबन्धसाहित्ये स्थानमायाति । भारतस्य पूर्वभागे स्मृतिसमुच्चयस्य ग्रन्थस्य प्रभावोऽस्ति । प्रायेण उत्कल-वङ्ग-मैथिलस्मृतिनिबन्धृभिः शङ्खधरस्मृतः । परन्तु शङ्खधरस्य ग्रन्थोऽयं नैवोपलभ्यते । शम्भूकरबाजपेयी उत्कलधर्मशास्त्रनिबन्धजगति अम्लानप्रतिभा भवति । उत्कलेषु यावन्तः धर्मशास्त्रन्निबन्धग्रन्थाः निर्मिताः सन्ति । तेषु बाजपेयीपरिवारसदस्यैः बहुभिः ग्रन्थाः सङ्कलिताः। तेषु नरसिंहबाजपेयीद्वरा नित्याचारप्रदीपग्रन्थाः, शम्भूकरस्य पुत्र विद्याकरबाजपेयीद्वारा स्मृत्याचारपद्धति, वृहस्पतिसूरिणा कृत्यकौमुदी, कालिदासचैनीद्वारा शुद्धिचन्द्रिका, गजपति-पुरुषोत्तमदेवद्वारा मुक्तिचिन्तामणि गोपालार्च्चनविधिश्चेति ग्रन्थद्वयं, गोदावरीमिश्रेण हरिहरचतुरङ्गाख्ययुद्धकौशलभित्तिकग्रन्थः, गजपतिप्रतापरूद्रेण महाराजेन प्रसिद्धसरस्वतीविलासाख्यग्रन्थः विप्रमिश्रद्वारा श्राद्धप्रदीपः, महामहोपाध्याय दिव्यसिंहमहापात्रद्वारा कालदीपश्राद्धदीपौ ग्रन्थौ, गदाधरराजगुरुद्वारा अष्टादशसारविशिष्टा

गदाधरपद्धतिः, यत्र कालसारस्य प्रसिद्धिः सर्वत्र भारतवर्षे विद्यते । अपरैरपि मुरारीमिश्रः, विप्रमिश्रः, लक्ष्मीधरमिश्रः, रघुनाथदासः, वासुदेवरथः प्रमुखाः निबन्धारः स्वस्व निबन्धरचनाद्वारा यथा स्व पाण्डित्यं प्रदर्शयन्ति. । तथैव सुरभारत्याः प्रीतिपात्राण्यपि भवन्ति ।

**उत्कलीयस्मृतिनिबन्धृषु श्रीविश्वनाथमिश्राः**

धर्मशास्त्रजगति यद्यपि अनेके निबन्धग्रन्थाः तन्निबन्धारश्चाद्रियन्ते तथापि तेषु स्मृतिसारसंग्रहकर्त्ता श्रीविश्वनाथमिश्रः अन्यतमः । अयमुत्कलीयः, स्मृतिसारसंग्रहश्चास्यैकैव कृतिः । असौ स्वकीये ग्रन्थे स्वविषये न किमप्युक्तवान् । यद्यपि प्रायशः निबन्धारः स्वस्वग्रन्थेषु स्वप्रशस्ति-गोत्रजन्मस्थानवंशपरम्परादिविषये वर्णयन्तः दृश्यन्ते । अस्य विषये संक्षेपेण केवलम् इदमेव वक्तुं शक्यते यदयं मिश्रोपनामयुक्तउत्कलीयब्राह्मणपरिवारे समजायत । तस्य पितृपितामहादिविषये गोत्रविषये वा नैव किमपि निश्चेतुं शक्यते ।

**ग्रन्थकृद्देशः-** स्मृतिसारसंग्रहस्य कर्त्ता श्रीमान् विश्वनाथमिश्रः उत्कलीय एव इत्यत्र नास्ति कश्चन सन्देहः । यतो हि उत्कलस्य बहुषु स्थानेषु स्मृतिसारसंग्रहस्य ताडपत्रपुस्तिका उत्कललिप्यामेव समुपलभ्यते । अपि च अनेन अनेके उत्कलीयस्मृतिकाराः स्वग्रन्थे उट्टङ्किताः । अन्यैश्चोत्कलीयस्मृतिकारैः स्वस्वनिबन्धग्रन्थलेखनावसरे अस्यापि विश्वनाथमिश्रस्य नाम समुद्घोषितिम् । तत्र श्राद्धद्वीपे श्रीमता दिव्यसिंहेन एवं भणितं यत्-

> कर्षुसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोडषशम् ।
> प्रत्याब्दिकञ्च न शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥

इति छान्दोग्यपरिशिष्टविरोधात् । कर्षुसमन्वितं सपिण्डीकरणश्राद्धमिति विश्वनाथमिश्राः ।

कालसर्वस्वकारः कृष्णमिश्रः अपि स्वग्रन्थे इमं विश्वनाथमिश्रं चतुर्वारं विभिन्नेषु प्रकरणेषु स्मरति । यथा महाष्टमीप्रकरणे अत्र विश्वनाथ इत्यादि, श्रवणाद्वादशीप्रकरणे विश्वनाथादिभिः महाप्रामाणिकैरनुक्तैः

इत्यादि । अपि च बलभद्रपूर्णिमाप्रसङ्गे विश्वनाथादिव्यसिंहौ पुनश्च अमावास्याश्राद्धविचारप्रकरणे तस्मात् वाजपेयी-रघुनन्दन-विश्वनाथादिभिर्बहुस्मार्त्तसम्बन्धीयम् इत्यादि प्रत्यपादि ।

पुनश्च अनेन विश्वनाथमिश्रेण स्वग्रन्थे शम्भुकरमिश्रवाजपेयिनः, विद्याकरमिश्रः, बृहस्पतिसूरिणश्च नामोट्टङ्कनात् एतत् स्पष्टं वक्तुं शक्यते यदयं ग्रन्थकारः अवश्यमुत्कलीय एव । यद्यपि नरसिंहवाजपेयिनः नामोट्टङ्कनमनेन नैव कृतं दृश्यते तत् समसामयिकानामन्येषां नामोट्टङ्कनं सत्त्वे अपि तत्रैवं समाधातुं शक्यते यत् प्रायशः द्वयोः समसामयिकयोः स्मृतिनिबन्धकारयोः पारस्परिककलहात् एवं संजातमिति । तथैव ईर्षया अयमपि अन्यतममुख्यस्मृतिनिबन्धकारेण गदाधरराजगुरूणा कालसाराख्यस्वग्रन्थे अनोत्ट्टङ्कितोऽपि अस्य विषयाः स्वग्रन्थे विचारिताः ।

श्रीमता विश्वनाथमिश्रेण स्मृतिसारसंग्रहे स्वग्रन्थे प्रथमाष्टमी-प्रकरणे तत्र उत्कलेषु इत्यादिवाक्ये उत्कलशब्दस्य प्रयोगादयं उत्कलीय इति निश्चप्रचं वक्तुं शक्यते ।

एवं एतैः वचनैः वक्तुं शक्यते यत् निर्दिष्टरूपेण यद्यपि उत्कलस्य कस्मिन् भूभागेऽयं जात इति वक्तुं न शक्यते तथापि अयमुत्कलीय एवेत्यत्र नास्ति कापि विचिकित्सा ।

**ग्रन्थकृत्कालः-** स्मृतिसारसंग्रहे माधवाचार्यस्य नामोल्लेखः दृश्यते । यः दाक्षिणात्ये चतुर्दशशताब्द्यां मुख्यतमो निबन्धकारो भवति। अतः अयमवश्यमेव चतुर्दशशताब्द्याः परवर्त्ती एव । पुनश्च अनेन स्वग्रन्थे कृत्यकौमुदीग्रन्थस्य नामोद्धरणात् ज्ञायते यत् कृत्यकौमुदीकारस्य बृहस्पतिसूरिणः परवर्त्तिकालीनः अयं विश्वनाथः इति । अतोऽस्य कालः पञ्चदशशतकस्यानन्तरमेव भवितुमर्हतीति । यतो हि बृहस्पतिसूरी उत्कलेषु पञ्चदशशतके कृत्यकौमुदीग्रन्थं विरचितवान् । पुनश्च नरसिंहवाजपेयिनः नामोट्टङ्कनाभावात् ईर्षया वा अज्ञानाद्वा भवतु उभौ समसामयिकौ इति वक्तुं शक्यते ।

नरसिंहवाजपेयिनः कालः षोडशशतकस्योत्तरार्द्ध एव । अतः अस्य कालः षोडशशतकस्योत्तरार्द्धसमीपवर्त्ति एव भवितुमर्हति ।

स्मृतिसारसंग्रहस्य एकस्याः मातृकायाः (डि.एच्. १०८) पुष्पिकायामेवं लिखितमस्ति यत्-

श्लोकानान्तु सहस्रे द्वे द्वे शते द्वे च विंशति ।
ततो दश पुनः श्लोकाः ग्रन्थसंख्या प्रकीर्त्तिताः ॥
गापीनाथनृपस्याङ्के तृतीये मासि कार्त्तिके ।
वासरेकैर्भगवता लिखितः स्मृतिसंग्रहः ॥

इत्यस्माल्लेखादेवं विज्ञायते यत् राज्ञः गापीनाथदेवस्य तृतीये अङ्के ग्रन्थः अयं लिखित इति । अयं राजा गोपीनाथदेवः भोईवंशीय आसीत् । स च उत्कलप्रदेशस्य खोर्द्धायां (स्थानविशेषः) ख्री.१७१८-१७२५ संवत्सरमध्ये राज्यशासनमकरोत् । अतः तस्य तृतीये अङ्के अर्थात् १७२० खीष्टाब्दे ग्रन्थोऽयं लिखित इति पर्यालोचनया सम्भावयितुं शक्यते ।

पुनश्च गदाधरराजगुरोः पूर्वं ग्रन्थस्यास्य महान् समादर उत्कलेषु आसीत् । परन्तु कालसारस्य रचनानन्तरं ग्रन्थस्य तथा प्रभावः नानुभूतः। यतः गदाधरस्य कालः अष्टादशशतकस्य प्रथमपाद इति विचारितः तद्दृष्ट्या परवर्त्ती नायं भवितुमर्हति ।

पुनश्च स्मृतिसारसंग्रहे ग्रन्थे उपाकर्मकालनिर्णयप्रसङ्गे 'इति दिवाकर' इति दिवाकरभट्टस्य नामग्रहणात् दिवाकरभट्टस्य च ख्री. १५५७-१६४० संवत्सरमध्ये डॉ० काणेमहोदयेन कालनिर्णितत्वात् विश्वनाथः ख्री. १६४० संवत्सरसमीपवर्त्ती भवितुमर्हति । अर्थात् शप्तदशशतकस्य मध्यभाग एव श्रीविश्वनाथमिश्रस्य काल इति निर्णितुं शक्यते ।

**ग्रन्थकृत्कृतिः-** स्मृतिसारसंग्रहस्य ग्रन्थस्य कर्त्ता श्रीविश्वनाथमिश्र इति ग्रन्थारम्भे तेनैव प्रतिपादितम् । यथा मङ्गलाचरणे श्रीविश्वनाथः स्मृतिसारसंग्रहमिति ।

स्मृतिसारसंग्रहग्रन्थावलोकनेन एवं ज्ञायते यत् विश्वनाथमिश्रेण ग्रन्थमिमं विहाय नान्यः कश्चन ग्रन्थो लिखितः । यतो हि स्मृतिसार-संग्रहग्रन्थोपलब्धिकालतः षष्ठीवर्षेभ्यः पूर्वं परतश्च नास्ति कश्चन ग्रन्थः तन्नाम्ना समुपलब्धि आसीदिति श्रीमतः केदारनाथमहापात्रस्याभिमतम्। यद्यपि श्रीमता विश्वनाथमिश्रेणायमेवैको ग्रन्थो लिखितः । तथापि तत्काले तस्यैव ग्रन्थस्योत्कले अतीव ख्यातिः महांश्चादर आसीदिति तत् परवर्त्तिना सूरिणा स्वाभिमतेभ्यो ज्ञायते ।

## तुलनात्मकदृष्ट्या स्मृतिसारसंग्रहग्रन्थस्य वैशिष्ट्यं समीक्षणञ्च-

श्रीमता भगवता विश्वनाथमिश्रेण स्मृतिसारसंग्रहः नामधेयः केवलमेकैव ग्रन्थो विरचितः । यद्यपि ग्रन्थोऽयं अनेकासां स्मृतीनां साररूपेणोद्धृतः । तथापि न कस्या अपि स्मृतेः पङ्क्तिसहोद्धरणमनेन कृतम् ।

मन्वादिपुरातनस्मृतिं विहाय अर्वाचीनैः नैतादृशः स्मृतिग्रन्थः विरचितो दृश्यते यथा विश्वनाथमिश्रेण विरचितः । समुदायग्रन्थः सार्द्धद्विशतोत्तरसहस्रद्वयात्मकैः श्लोकैः निबद्धोऽस्ति ।

सर्वे श्लोकाः अनुष्टुपछन्दसा प्रायशः सन्ति । एकोऽपि श्लोकः नानुवादात्मको भवति, नापि कस्य स्मृतिकारस्यानुकरणमनेन कृतम्।

श्लोकमाध्यमेन सर्वेऽपि धर्मशास्त्रविषया अनेन प्रतिपादिताः। ग्रन्थेऽस्मिन् तत्पूर्ववर्त्तिनाम् अनेकेषां स्मृतिपुराणानां निबन्धकाराणाञ्च नामानि उद्धृतानि । स्वमतमपि अन्ते व्यवस्थापितम् ।

स्मृतिकारेषु मुख्यतः मन्वत्रि-याज्ञवल्क्य-दक्ष-व्यास-वसिष्ठ-बृहद्वशिष्ठ-बृहत्शातातप-प्रचेता-प्रजापति-बौधायन-मरीचि-उशना-कात्यायन-कण्व-गौतम-जातुकर्ण-जाबालि-देवल-नारद-जमदग्नि-आपस्तम्ब-अङ्गिरा-पितामह-यम-हारीत-लोगाक्षि-विश्वामित्र-शङ्ख-संवर्त्त-सुमन्तुप्रभृतीनां नामानि उट्टङ्कितानि ।

पुराणेषु आग्नेयपुराण-आदित्यपुराण-नारदीयपुराण-पद्मपुराण-ब्रह्मपुराण-ब्रह्माण्डपुराण-श्रीमद्भागवतपुराण-मत्स्यपुराण-महाभारत-भगवद्गीता-मार्कण्डेयपुराण-लिङ्गपुराण-वराहपुराण-विष्णुधर्मोत्तरपुराण-स्कन्दपुराणादीनामुद्धरणमपि अनेन कृतम् ।

निबन्धकारेषु कालादर्शकार-कृत्यकौमुदीकार-जीमूतवाहन-दिवाकर-माधवाचार्य-विज्ञानेश्वर-विद्याकर-विश्वरूप-शतानन्द-सत्यव्रतप्रभृतीनां नामान्यपि समुद्धृतान्यनेन ।

गदाधरराजगुरोः पूर्वं ग्रन्थस्यास्य स्मृतिसारसंग्रहस्य ख्याति उत्कलेषु महत्यासीत् । तत्काले च ग्रन्थोऽयं क्षुद्रोऽपि बहुमूल्यग्रन्थरूपेण प्राधान्यमभजत् । एकमपि ग्रन्थं विरच्य उत्कलस्य धर्मशास्त्रजगति श्रीविश्वनाथमिश्रः अभूतपूर्वाकृतिं समर्जयामास । अतः ग्रन्थस्यास्य महद् वैशिष्टयं वर्त्तते । यद्यपि तदानीं धर्मशास्त्रविषये बहवः निबन्धग्रन्था आसन् तथापि तत्र विश्वनाथमिश्रस्य स्मृतिसारसंग्रह अतीव जनप्रिय आसीत् । यतो हि उत्कलस्य सर्वेषु प्रान्तेषु ग्रन्थस्यास्य प्रतिलिपयः उपलब्धाः भवन्ति । पुनश्च धर्मशास्त्रस्य सर्वानेव अवान्तरविषयान् सूक्ष्मातिसूक्ष्मं विचार्य तद्विषये निर्णयं दत्तवान् ।

यद्यपि अनेके निबन्धग्रन्थाः धर्मशास्त्रजगति वर्त्तन्ते । तथापि ग्रन्थस्यास्य वैशिष्ट्यं महत्त्वञ्च किमपि विलक्षणं प्रतिभाति । अस्य रचनाशैली यद्यपि नापूर्वा तथापि विषयसन्निवेशप्रसङ्गे काप्यपूर्वता दृश्यते । ग्रन्थकारोऽयं उत्कलीय इति कृत्वा उत्कलीव्रतोत्सवेषु प्रथमाष्टमीं प्रति प्राथम्यमनेन प्रदत्तम् । यः उत्सवः उत्कलं विहाय नान्यत्र परिपाल्यते । ततः पूर्वमुत्कले ये निबन्धार आसन् तैः प्रथमाष्टमीपालनविधिविषये न किमप्युक्तम् । परन्तु अस्यानन्तरं ये अन्ये निबन्धारः धर्मशास्त्रविषये उद्भूताः तैः सर्वैः अस्य मतं समर्थितं संगृहीतञ्च ।

अस्मिन् ग्रन्थे उत्कले प्रचलितानां व्रतानां उत्सवानाञ्च तिथिविशेषेषु निर्णयं विधाय चैत्रादारभ्य फाल्गुनान्तानां मासानां कृत्यानि संविचार्य श्राद्धाशौचादिविषये सम्यक् आलोच्य अन्ते

गर्भाधानादारभ्य विवाहान्तानां संस्काराणां कालविध्यादयः विचारिताः।

**व्यवहारिके जीवने स्मृतिसारसंग्रहस्योपादेयत्वम्-**

व्यावहारिके जीवने धर्मशास्त्रस्योपादेयत्वमुपजीवित्वञ्च वर्त्तत एव । उत्कलेषु प्रचलतां व्रतोत्सवानां मध्ये मुख्यतः प्रथमाष्टमी, प्रावरणाष्टमी, माघसप्तमी, अशोकाष्टमी, पवित्रारोपणम्, यमद्वितीया, पौषाभिषेकादीनां विषयाणां कर्मकालः निर्णयः तत्र विहितः । अतः तदनुसारेण उत्कलीयानां धर्मशास्त्रीयानुष्ठाने सौकर्यमनुभूतम् । गर्भाधानादारभ्य विवाहं यावत् समेषां संस्काराणां कालविध्यादि-प्रतिपादकत्वेन श्राद्धाशौचादीनाञ्च विषये उत्कलीयदेशाचारदृष्ट्या सम्यक् निर्णितत्वाच्च उत्कलेषु धर्मपरम्परायां लौकिकव्यवहारेष्वपि ग्रन्थस्यास्य महती प्रयोजनीयता वर्त्तते । अतः श्रीविश्वनाथप्रणीतः स्मृतिसारसंग्रहाभिधोऽयं ग्रन्थः उत्कलीयानां व्रतोत्सवाद्यनुष्ठानेषु सुमहदुपकारक इत्यत्र नास्ति कश्चन सन्देहस्य लेशावसर इति ।

## मातृकाविवरणम्

स्मृतिसारसंग्रहस्य मूलग्रन्थस्य तालपत्रमातृकाः तालपत्रोपरि हस्ताक्षरेण लिपिवद्धो भूत्वा भुवनेश्वरनगरे अवस्थिते श्रीजयदेव-राज्यसंग्रहालये पोथिविभागे धर्मशास्त्रविभागे दशप्रतिलिपयः भूत्वा विद्यन्ते । प्रतिलिपीनां संग्रहः उत्कलस्य विभिन्नेषु प्रान्तेषु तथा पश्चिमवङ्गस्य विभिन्नप्रान्तेषु जातः । प्रथमा मातृका भवति डि.एच्. ७४३ अत्र २२० पत्राणि सन्ति । लिपिः उत्कलीयाक्षराणि सुन्दराणि । अस्याः मातृकायाः प्राप्तिस्थानम् पुरीश्रीक्षेत्रम् । द्वितीयामातृका भवति डि.एच्. ४२७ । अत्र २२६ पत्राणि । प्राप्तिस्थानं पश्चिमवङ्गस्य मेदिनीपुरम् । अस्याः रचनाकालस्तु मातृकालेखकाभ्यां १२८६ साल इति अर्थात् १७८२ शकाब्दः इति उट्टङ्कितम् । अक्षराणि उत्कललिप्यां लिखितानि सन्ति । मातृकालेखकः हरिनारायणदेवशर्मा उल्लेखोऽस्ति।

तृतीया मातृका भसति डि.एच्. १०८ । चतुर्थमातृका भवति डि.एच्. ११८६ । पञ्चममातृका डि.एच्. १४७ । षष्ठमातृका डि.एच्. १९ । सप्तममातृका डि.एच्. १३ । अष्टममातृका डि.एच्. ४३५ । नवममातृका डि.एच्. २८७ । दशममातृका डि.एच्. ७६६ । एताः दशमातृकाः विहाय समग्रे राज्ये बहुषु स्थानेषु स्मृतिसारसंग्रहस्य तालपत्रमातृका बह्व्यः उपलभ्यन्ते । तस्मात् स्मृतिसारसंग्रहस्य लोकव्यवहारे महती उपयोगीता, महान् प्रचारश्चासीदिति निश्चप्रचं वक्तुं शक्यते ।

श्रीविश्वनाथमिश्रविरचितस्य स्मृतिसारसंग्रहस्य प्रकाशनं भवतीति ज्ञात्वा नवकोटिकर्णाटोत्कलकलवर्गेश्वरवीराधिवीरवर-प्रबलप्रतापिश्रीश्रीजगपतिदिव्यसिंहदेवः स्वकीयमाशीर्वादपत्रं दत्त्वा मामनुगृहीतः, अतः महाराजमहाभागाय हार्दिकीं कृतज्ञतां व्याहरामि।

ग्रन्थस्यास्य प्रकाशनकाले मदीयगुरुवरैः श्रीजगन्नाथसंस्कृत-विश्वविद्यालयस्य धर्मशास्त्रविभागाध्यक्षैराचार्यपदमलङ्कृतैः श्रीमद्भिः किशोरचन्द्रमहापात्रमहाभागैः स्वाभिशंसन पत्रप्रदानेनाहं प्रोत्साहितः, अतः श्रीमद्भ्यः गुरुपादेभ्यः महापात्रमहाभागेभ्यः प्रणामततिपूर्वकं कृतज्ञतां व्याहरामि ।

स्मृतिसारसंग्रहस्य प्रकाशनं भवतीति ज्ञात्वा श्रीजगन्नाथ-संस्कृतविश्वविद्यालयस्य कुलपतिचराः स्नातकोत्तरविभागाध्यक्षाः साहित्यविभागस्याचार्याः समग्रभारतवर्षे स्वनामधन्याः श्रीहरेकृष्ण-शतपथिमहाभागाः ग्रन्थस्य पुरोवाक् आंग्लभाषया विलिख्य ग्रन्थस्यास्य महत्त्वं विदुषां पुरतः समुपस्थापयन्ति, अतः तेभ्यः शतपथिमहाभागेभ्यः प्राच्यपाश्चात्यपण्डितप्रवरेभ्यः स्वकीयां हार्दिकीं कृतज्ञतामाधर्मर्णताञ्च विज्ञापयामि ।

ग्रन्थस्यास्य प्रकाशनाय नितरामतितरां सुतरां च प्रोत्साहितवती मम धर्मपत्नी उर्मिलादेवी प्रतरामेव स्मरणयोग्यास्ति । अन्ये च बन्धबः, सहकर्मिणः, छात्राश्च स्मर्त्तव्याः, येषां स्नेहः मां सर्वदैव प्रेरयति ।

प्रच्छदपट्टचित्रनिर्माणाय स्वकीयं धनं दत्त्वा मम श्वश्रुः पुष्पलतादेवी ममानुगृहीतवती अतः तेस्यैः हार्दिकीं कृतज्ञतां प्रणामततिं च विनिवेदयामि ।

ग्रन्थस्य प्रकाशनाय श्रीदेवव्रतरथमहोदयाय धन्यवादं विज्ञापयामि तथा ग्रन्थोऽयं यदि विदुषामुपकाराय भवेत्तदा मम श्रमसार्थको भविष्यतेति श्रीजगन्नाथदेवचरणारविन्दे संप्रार्थ्य विरमामि विस्तरादिति ।

विदुषामनुचरः

**श्री अतुलकुमारनन्दः**

पुरी, उत्कलाः

# ग्रन्थसङ्केताः

| | | | |
|---|---|---|---|
| अ० स्मृ० | - | - | अत्रिस्मृतिः |
| अङ्गि० स्मृ० | - | - | अङ्गिरः स्मृतिः |
| अ० पु० | - | - | अग्निपुराणम् |
| अनु० प० | - | - | अनुशासनपर्व |
| आ०गृ०सू० | - | - | आपस्तम्बगृह्यसूत्रम् |
| आश्व०गृ०सू० | - | - | आश्वलायनगृह्यसूत्रम् |
| आ०ध०सू० | - | - | आपस्तम्बधर्मसूत्रम् |
| ऋ०वे० | - | - | ऋग्वेदः |
| ऐ०ब्रा० | - | - | ऐतरेयब्राह्मणः |
| क०उ० | - | - | कठोपनिषत् |
| का०स्मृ० | - | - | कात्यायनस्मृतिः |
| का०दी० | - | - | कालदीपः |
| का०मा० | - | - | कालमाधवः |
| का०मा०का० | - | - | कालमाधवकारिका |
| का०सा० | - | - | कालसारः |
| कू०पु० | - | - | कूर्मपुराणम् |
| कृ०क० | - | - | कृत्यकल्पतरुः |
| कृ०कौ० | - | - | कृत्यकौमुदी |
| कृ०कौ०शो०प्र० | - | - | कृत्यकौमुदीशोधप्रबन्धः |
| कौ०अ० | - | - | कौटलीयार्थशास्त्रम् |
| ग०पु० | - | - | गरुडपुराणम् |
| गो०गृ०सू० | - | - | गोभिलीयगृह्यसूत्रम् |
| गौ०ध०सू० | - | - | गौतमधर्मसूत्रम् |
| च०चि० | - | - | चतुर्वर्गचिन्तामणिः |
| त०वा० | - | - | तन्त्रवार्त्तिकः |
| ता०ब्रा० | - | - | ताण्ड्यब्राह्मणः |
| तै०आ० | - | - | तैत्तिरीयारण्यकः |

| | | | |
|---|---|---|---|
| तै०ब्रा० | - | - | तैत्तिरीयब्राह्मणः |
| द०स्मृ० | - | - | दक्षस्मृतिः |
| ध०इति० | - | - | धर्मशास्त्रेतिहासः |
| ना०पु० | - | - | नारदपुराणम् |
| ना०स्मृ० | - | - | नारदस्मृतिः |
| निरु० | - | - | निरुक्तः |
| नि०सि० | - | - | निर्णयसिन्धुः |
| नि०सि०टि० | - | - | निर्णयसिन्धुटिप्पणी |
| नै०च० | - | - | नैषधीयचरितम् |
| प०पु० | - | - | पद्मपुराणम् |
| प०स्मृ० | - | - | पराशरस्मृतिः |
| प०मा०स्मृ | - | - | पराशरमाधवीयस्मृतिः |
| पा०गृ०सू० | - | - | पारस्करगृह्यसूत्रम् |
| पा०सू०भा० | - | - | पाणिनिसूत्रभाष्यम् |
| पू०मी०सू० | - | - | पूर्वमीमांसासूत्रम् |
| बृ०हा०सू० | - | - | बृद्धहारीतस्मृतिः |
| बृ०स्मृ० | - | - | बृहस्पतिस्मृतिः |
| बौ०स्मृ० | - | - | बौधायनस्मृतिः |
| बौ०ध०सू० | - | - | बौधायनधर्मसूत्रम् |
| ब्र०पु० | - | - | ब्रह्मपुराणम् |
| भ०गी | - | - | भगवत्गीता |
| भी०प० | - | - | भीष्मपर्वः |
| म०पा० | - | - | मदनपारिजातः |
| मा०स्मृ० | - | - | मार्कण्डेयस्मृतिः |
| मिता० | - | - | मिताक्षरा |
| य०स्मृ० | - | - | यमस्मृतिः |
| या०स्मृ० | - | - | याज्ञवल्क्यस्मृतिः |
| र०म० | - | - | रघुवंशमहाकाव्यम् |
| ल०हा०स्मृ० | - | - | लघुहारीतस्मृतिः |
| ला०गृ०स्मृ० | - | - | लाट्यायनगृह्यसूत्रम् |

लाo श्रौo सूo - - लाट्यायनश्रौतसूत्रम्
लिo पुo - - लिङ्गपुराणम्
वनo पo - - वनपर्व
वo पुo - - वराहपुराणम्
वo स्मृo - - वसिष्ठस्मृतिः
वo धo सूo - - वसिष्ठधर्मसूत्रम्
वाo पुo - - वायुपुराणम्
व्याo स्मृo - - व्यासस्मृतिः
विo धo पुo - - विष्णुधर्मोत्तरपुराणम्
शाo स्मृo - - शातातपस्मृतिः
शान्तिo पo - - शान्तिपर्व
शुo स्मृo - - शुक्रस्मृतिः
श्राo दीo - - श्राद्धदीपः
श्राo प्रo - - श्राद्धप्रदीपः
शंo स्मृo - - शङ्खस्मृतिः
स्कo पुo - - स्कन्दपुराणम्
स्मृo चo - - स्मृतिचन्द्रिका
स्मृo सo - - स्मृतीनां समुच्चयः
संo मo - - संस्कारमयूखः
हाo स्मृo - - हारीतस्मृतिः

***

# विषयानुक्रमणिका

***

॥ श्री गणेशाय नमः ॥

# अथ विधिनिर्णयः

[१]मन्वादिशास्त्राणि गुरोरधीत्य तदीयभाष्याणि चिरं यथार्थतः ।
दृष्ट्वा च [२]शिष्टाचरणं करोति वै श्रीविश्वनाथः स्मृतिसारसंग्रहम् ॥

अथ प्रमाणतः सिद्धं तावत् चोदनायाः धर्मे प्रमाण्यम् । तन्मूलकत्वात् स्मृतिपुराणानामपि प्रामाण्यं सिद्धम् । [३]चोदना च विधिवाक्यम् । [४]विधिश्च द्विविधः । [५]अनुष्ठानप्रवृत्तिनिष्ठो निवृत्तिनिष्ठश्चेति। प्रवृत्तिनिष्ठो यथा-

अमावास्यायामपराह्णोपि पिण्डपितृयज्ञेन यजेतेति ।

स्मृतिश्च-

दर्शे स्नात्वा पितृभ्यश्च दद्यात् कृष्णतिलोदकम् ।
अन्नं च विधिवद् दद्यात् सन्ततिस्तेन वर्द्धते ॥

निवृत्तिनिष्ठो यथ-

अमावास्यां न तु च्छिन्द्यात् कुशांश्च समिधस्तथा ।
सर्वत्रावस्थिते सोमे हिंसायां ब्रह्महा भवेत्॥

चिन्तामणौ-

सायं सन्ध्या परान्नं च रात्रौ मैथुनभोजने ।
तैलं माषं तिलापिष्टममावास्यां विवर्जयेत् ॥

---

प्रणम्य परमात्मानं चक्राक्षिं जगदीश्वरम् ।
करोम्यहं सुखार्थाय टिप्पणीं मितभाषिणीम् ॥

१. ग्रन्थारम्भे विघ्नविनाशाय ग्रन्थकृद् विश्वनाथो मन्वादिमङ्गलवाचकं शब्दमभिधाय मङ्गलमातनोति । ग्रन्थस्यास्य स एव कर्त्तेति मङ्गलश्लोकादस्माद् ज्ञायते ।

२. शिष्टाः खलु विगतमत्सराः कुम्भीधान्याः अलोलुपा दम्भदर्पलोभमोहक्रोध-विवर्जिताः । - बौ.ध.सू. (१/५) ।

३. चोदनालक्षणोर्थो धर्मः । - पू.मी.सू. (१/१-२) ।

४. विधिस्त्वप्राप्तस्य प्रापणं विधिः ।

५. यज्ञादिनित्यनैमित्तिककाम्यकर्मानुष्ठानम् ।

सायंसन्ध्यातिलापिष्टयोर्निषेधः क्वचिदपि ।

सूर्यऋक्षगते सोमे परान्नं यो हि भक्षयेत् ।
तस्य मासकृतं पुण्यं यस्यान्नं तस्य तद्भवेत् ॥
वनस्पतिगते सोमे परान्नं यो हि भुञ्जयेत् ।
तस्य मासकृतो होमो दातारमधिगच्छति ॥

होममिति पाठः साग्निपरम् । केचित्तस्य मासकृतं फलं पुण्यं पठन्ति । तन्मते साग्निनिरग्निसाधारणमिति । कालादर्शे-

दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः ।
कुर्वन् तत्र निराचष्टे पितॄन् हन्तीति जीवतः ॥

इति कल्पतरुः । तथाहि-

वेदाः प्रमाणं स्मृतयः प्रमाणं तदभावे शिष्टाचारः प्रमाणमिति।
आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् ।

## अथ संवत्सरनिर्णयः

स च[६] संवत्सरश्चतुर्विधः। सौरसावनचान्द्रनाक्षत्रमान-व्यवहारात्। तथा च शतानन्देनोक्तम्- पञ्चषष्ट्यधिकशतत्रयाहोरात्राणां सवितुः द्वादशराशिभोगः सौरसंवत्सरः । षष्ट्यधिकत्रिशताहोत्राणां साबनोब्दः । स एव षड्भिरहोरात्रैर्हीनश्चतुःपञ्चाशतामहोरात्राणां चान्द्राब्दः । अत एव सौरसंवत्सरादेकादशभिरूनश्चान्द्रसंवत्सरः ।

---

६. निमेषादिपरार्द्धान्तेषु जन्यकालेषु संवत्सरः प्रधानभूतोन्ये गुणभूताः कालस्य जन्यत्वपक्षे चिरक्षिप्रप्रत्ययोपाधिद्वारेण कलयत्याक्षिपति इति अर्थव्युत्पत्तिः । संवत्सरो नामायनाद्यवयवयुक्तोवयवी कालविशेषः । सम्यक् वसन्त्यभिमन्नयनर्त्तुमासादयः इति व्युत्पत्तेः । स च द्वादशमासात्मकः कालः । द्वादशमासाः संवत्सरः इति श्रुतेः ।

एतेषां संवत्सराणां कर्मविशेषेषूपयोगिता शास्त्रान्तरेषूपवर्णिता । यथा-

अब्दः पञ्चविधश्चान्द्रो व्रतादौ तिलकादिकेः ।
सुजन्मादिव्रते सौरो गोसत्रादिषु सावनः ॥
आयुर्दाये हि नाक्षत्रो बार्हस्पत्योधिवत्सरे ।
चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ॥

षोडशदिवसाष्टमासाधिक-वर्षद्वयेन । त्रिंशद्दिवसाधिमासं[७] जनयति । तथा द्वादशमासानां परिगणनैकपञ्चाशत् त्रिंशता च चन्द्रभोग्यनक्षत्राणां नक्षत्रसंवत्सरः । तदुक्तं विष्णुधर्मोत्तरे-

सौरेणाब्दस्तु मानेन यदा भवति भार्गव. ।
सावने तु तदा माने दिनषट्कं प्रपूर्यते ॥
दिनरात्राश्च ते राम प्रोक्ताः संवत्सरेण षट् ।
सौरसंवत्सरस्यान्ते मानेन शशिजेन तु ॥
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ।
समाद्वये साष्टमासे दिनषोडशकान्विते ॥

## अथ अयननिर्णयः

[८]अयनन्तु द्विविधम् । तच्च दक्षिणोत्तरसंज्ञकम् । तथा च काण्वशाखायां बृहदारण्यके श्रूयते । यान् षण्मासान् दक्षिणादिक्षु एतीति । यान् षण्मासान् उदगादित्य एतीति । सौरमानमेवैतत् । सौरमानमधिकृत्य उक्तं स्यादिति ऋतुत्रयम् इति धर्मोत्तरवचनात् । तत्र उत्तरायणदक्षिणायनविधिनिषेधत्वात् । तथा च ज्योतिःशास्त्रे-

देवतारामवाप्यादि प्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाशामुखे कुर्वन् न तत् फलमवाप्नुयात् ॥

---

७. अधिमासः- अस्य स्वरूपं ब्रह्मसिद्धान्ते-

चान्द्रो मासो ह्यसंक्रान्तो मलमासः प्रकीर्त्तितः ।

गृह्यपरिशिष्टे-

मलं वदन्ति कालस्य मासं कालविदोधिकम् । का.मा. पृ-५२ ।

काठकगृहे-

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव वा । का.मा. पृ-५३ ।
मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत् ॥ का.मा. पृ-५४ ।

८. अयते यात्यनेन ऋतुत्रयेण सूर्यो दक्षिणशामुत्तराशां चेति ऋतुत्रयमयनम् । तच्च द्विविधम् । दक्षिणायनमुत्तरायणं चेति । का.मा. पृ-४३ ।
मातृशब्द उग्रकर्मोपलक्षकः ।

उग्रे कर्मणि शान्ते च स्तोयने दक्षिणोत्तरे ॥ का.मा. पृ-३ ।

पुण्यानि यानि कर्माणि वर्जयेद् दक्षिणायने ।

उग्रदेवतानां प्रतिष्ठा दक्षिणायने कर्त्तव्या । तथा च वैश्वानरसंहितायाम्-

मातृभैरववाराहीनारसिंहत्रिविक्रमाः ।

महिषासुरहन्त्री च स्थाप्या वै [९]दक्षिणायने ॥

## अथ ऋतुनिर्णयः

[१०]स च षड्विधः । षड् वा ऋतवः इति श्रुतेः । यत्तु द्वादशमासाः पञ्चर्त्तवः इति । तत्र हेमन्तशिशिरयोरेकीकरणं विवक्षितम् । तथा च बह्वृचब्राह्मणे पठ्यते- द्वादशमासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेनेति। तत्र वसन्ताद्यनुक्रमेण चैत्रमासादिद्वन्द्वमिति क्रमः । तथा च काण्वशाखायाम् [११]इष्टकोपधानमन्त्रे पठ्यते ।

मधुश्च माधवश्च वासन्तिकावृतू । शुक्रश्च शुचिश्च ग्रैष्मावृतू । नभश्च नभस्यश्च वार्षिकावृतू । इषश्चोर्जश्च शरदावृतू । सहश्च सहस्यश्च हैमन्तिकावृतू। तपश्च तपस्यश्च शिशिरावृतू ।

ते वसन्तादयो द्विविधाः । ऋतवश्चान्द्राः [१२]सौराश्च । चैत्रादयश्चान्द्राः। तथा च ज्योतिःशास्त्रे- चैत्रो मासो मधुः प्रात्तो वैशाखो माधवो भवेत् । इत्यादि वचनेन एषां चैत्राद्यात्मकानां वसन्तादीनां चन्द्रगतिपरिकल्पनाश्चान्द्रत्वम् । केचित्तु बौधायनमतानुसारेण सौरेषु ऋतुषु मीनमेषयोर्मेषवृषयोर्वा इत्यभिधानात् द्वित्वं वैकल्पिकं वसन्तस्याङ्गभूतम्। तथा च तदनुसारेण ग्रीष्मादयोपि यथायथं विकल्प्यन्ते । विनियोगश्चेषामृतुविशेषाणां श्रुतिस्मृतिपुराणेष्ववगम्यते। तत्र श्रुतिः- वसन्ते ब्राह्मणोग्नीनादधीत । ग्रीष्मे राजन्यः । शरदि

---

९. वै शाब्दोप्यर्थे इति नि.सि. पृ.-२ ।

१०. स च ऋतुः । ऋ गतावित्यस्माद्धातोर्निष्पन्नः । इयर्ति गच्छति अशोकपुष्पविकासाद्य-साधारणलिङ्गमिति वसन्तादिकालविशेषः ऋतुः । स तु षड्विधः । का.मा. पृ.- ४४ ।

११. मासद्वयात्मकत्वं चाग्निचयने ऋतव्येष्टकोपधानब्राह्मणे श्रूयते इति । का.मा. पृ.- ४५ ।

१२. सौराः मीनादयो मासाः । नि.सि. पृ.-३ ।

वैश्यः। स्मृतिरपि- वसन्ते ब्राह्मणमुपनयेत । ग्रीष्मे राजन्यं शरदि वैश्यमिति ।

## अथ मासनिर्णयः

स च [१३]मासश्चतुर्विधः । तत्र तावत् चैत्रशुक्लादिका मासा इत्यभिप्रायेण प्रथमं चान्द्रो मासो निरूप्यते । तत्र यावता कालेन चन्द्रस्य वृद्धिक्षयौ स चान्द्रमासः । तथा च सिद्धान्तशिरोमणौ-

मस्यन्ते परिमीयन्ते स्वकलाः वृद्धिहानितः ।
मास एते स्मृता मासास्त्रिंशत्तिथिसमन्विताः ॥

एकस्मिन् राशौ रविर्यावत्कालं वर्त्तते सः सौरः मासः । तदुक्तं ब्रह्मसिद्धान्ते-

एकराशौ रविर्यावत् कालं मासः स भास्करः ।

त्रिंशत् सूर्योदयात् सावनो मासः । ब्रह्मसिद्धान्ते-

सावनस्त्रिंशता दिनैः[१४]।

केचित् नाक्षत्रं मासं वदन्ति ।

सर्वर्क्षपरिवर्त्तैस्तु नाक्षत्रो मास उच्यते ।

इति विष्णुधर्मोत्तरेभिहितम् । अत्र चान्द्रसौरसावनानां मध्ये कस्यचित्तत् प्रशस्तत्वं द्रष्टव्यम् । तथा च विवाहचूडोपनयनमङ्गलेषु सौरो मास एव। तदुक्तं शतानन्देन-

देवव्रतवृषोत्सर्गमेखलोद्वाहमङ्गलम् ।
सौरमासेन कर्त्तव्यं अभिषेकं न चाब्दिकम् ॥

तथा च ज्योतिःशास्त्रे-

---

१३. मासा इति सान्तं चन्द्रवाचकं प्रातिपदिकम् । तस्यायमिति सम्बन्धार्थेणि समासः। एवं सति चान्द्र एव मासशब्दो मुख्यः । अन्यत्र गौणः । मस् परिमाणे इत्यस्माद् धातोः निष्पन्नोयं मासशब्दः । चन्द्रवृद्धिक्षयाभ्यां स्वयं मस्यते यावता कालेन स चान्द्रो मासः । सूर्यस्य राशिर्गतिर्यत्र परिमीयते स सौरो मासः । एवमहोरात्राणां त्रिंशत् संख्या यत्र परिमीयते स सावनो मासः । नक्षत्राणां सप्तविंशतिसंख्या परिमीयतेनेनेति नाक्षत्रो मासः । का.सा- पृ-७ ।

१४. चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः । का.मा.पृ- ४८ ।

सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
अब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥

चान्द्रो मासोऽपि द्विविधः । दर्शान्तः पूर्णिमान्तश्चेति । हारीतः-

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः[१५] ।

अयमर्थः दर्शपौर्णमासयाजिना शुक्लप्रतिपदि दर्शेष्टिदेवते इन्द्राग्नी हूयेते इति दर्शान्तो मासः । पूर्णिमान्तो मासः कथ्यते । तथा च जयन्तीप्रकरणे श्रूयते-

मासि भाद्रपदेष्टम्यां कृष्णपक्षेर्द्धरात्रके ।
भवेत् प्रौष्ठपदे मासि जयन्ती नाम सा स्मृता ॥

दर्शान्तत्वपूर्णिमान्तत्वयोः [१६]समविकल्पानुष्ठाने तत्र वचनविशेषात् शिष्टाचाराद् व्यवस्था द्रष्टव्या । वचनविशेषस्तु ब्रह्मसिद्धान्ते पठ्यते-

अमावास्यापरिच्छिन्नो मासः स्याद् ब्राह्मणस्य तु ।
संक्रान्तिपौर्णमासाभ्यां तथैव नृपवैश्ययोः ॥

ननु यज्ञादौ सावनः स्मृतः । इत्यादिशब्देन प्रत्याब्दिकवारणाय प्रायश्चित्ता-पूर्वाया नृणां गमनागमनेन शौचादिके सावन एव । तथा च मनुः-

शुध्येत् विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति[१७] ॥

---

१५. 'यदाग्नेयाष्टकपालामावास्यायां पौर्णमास्यां चाच्युतो भवति' इति वचनादमावास्याया-माग्नेययागो विहितः । ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोमावास्यायाम् इति वचनाभ्यां इन्द्रदेवताकः सान्नाय्ययागोमावास्यायामपि विहितो भवति । अतः अमावास्यायां विहितानां प्रधानीभूतानां त्रयाणामेव यागानामिन्द्रोग्निश्च देवते भवतः । अतोत्र इन्द्रग्नी हूयेते इति अमावास्यायां परिलक्षितो भवति ।

१६. एकार्थत्वात् विकल्पः यवव्रीहिवद् विकल्पो वा ।

१७. मनुस्मृतिः ५/८३ ।

१८. गर्भाधानमृताविति योगीश्वरः । या.स्मृ. १-११ ।

तथा च [18]गर्भाधानादितः [19]पुंसवनसीमन्तोन्नयनादिकं[20] सावन एव ।

स्मृतिसंग्रहेऽपि-

[21]जातकर्म च पुंसूतिः सीमन्तोन्नयनं व्रतम् ।
मलिम्लुच्चेपि कुर्वीत निमित्तं यदि जायते ॥

## अथ एकभक्तनिर्णयः

तथा [22]एकभक्ते मध्याह्नो मुख्यकालः । [23]आसायमवशिष्टो गौणकालः ।

तथा अनन्तभट्टीये-

दिनार्द्धसमयतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि ॥

देवलोऽपि-

---

१९. सवनं स्पन्दनात् पुरा । या.स्मृ. १/११. मिताक्षरायाम्- पुंसवनाख्यं कर्मगर्भचलनात् पूर्वं भवति । या.स्मृ. १/११ ।

२०. षष्ठेष्टमे वा सीमन्तो इति या.स्मृ. १/११ । षष्ठेष्टमे वा मासि सीमन्तोन्नयनम् । एते च द्वे पुंसवनसीमन्तोन्नयने क्षेत्रसंस्कारककर्मत्वात् सकृदेव कार्ये । न प्रति गर्भम् । यथाह देवलः-

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ।
यं यं गर्भं प्रसूयते स सर्वः संस्कृतो भवेत् ॥ मित.या.स्मृ. १/११ ।

२१. गर्भकोशाज्जाते कुमारे जातकर्म । मिताक्षरा, या. स्मृ. १/११ ।

२२. अत्र सन्ध्याभोजननिषेधस्य रागप्राप्तभोजनपरतया प्रवृत्तेरिति । तच्चैकभक्तं त्रिविधम् । स्वतन्त्रमत्याङ्गमुपवासप्रतिनिधिरूपं चेति । पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनीतिथिः इति वैश्वानरव्रतादिषु स्वतन्त्रम् । मध्याह्ने पूजयेन्नृप इत्यादि विहितगणेशव्रतादौ अन्याङ्गमेकभक्तम् । तिथौ यत्रोपवास्यादेकभक्तेपि सा तिथिः इति सुमन्तुवाक्यादि-विहितमेकभक्तम् उपवासप्रतिनिधिरूपम् । मध्याह्नोस्य मुख्यकालः षोडशशप्तदशादिदण्डो मुख्यकालः । इति स्कान्दोक्ते । कालोऽयं षोढा भिद्यते । (१) पूर्वेद्युर्व्याप्तिः, (२) परेद्युर्व्याप्तिः, (३) उभयेद्युर्व्योप्तिः, (४) अनुभयव्याप्तिः, (५) समांशव्याप्तिः, (६) विषमांशर्व्याप्तिश्चेति । प्रथमपक्षे पूर्वदिने, द्वितीये परदिने, तृतीये पूर्वदिने गौणकस्याधिकत्वात्, चतुर्थे पूर्वदिने गौणकालस्येव सत्त्वात् । पञ्चमे द्वितीयवत् षष्ठे यद्दिनेधिकांश इति निर्णयः ।

२३. मध्याह्नत आसायमिति ।

दिनार्द्धसमयेतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु ॥

अत्र दिनार्द्धस्योपरि सार्द्धमुहूर्त्तपरिमितः कालः । पञ्चधाविभागेन मध्याह्नस्योपरिभागे मध्याह्नस्याद्यभागः एकभक्तस्य मुख्यकालः । दिनार्द्धसमयेतीते सति समनन्तरभावित्वात् अस्तमयात् प्राचीनावशिष्टो गौणकालः । एवं व्यवस्थिते सति मुख्यकालव्यापिनी तिथिर्ग्रहीतव्या । ब्रह्मपुराणे-

मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः ॥

यदा पुनः एकस्मिन्नपि दिने कृत्स्नव्यापिनी लभ्यते किन्तु पूर्वा तिथिः स्वल्पं मध्याह्नं स्पृशति, उत्तरापि तावन्तमेव तदा खर्वत्वात् उत्तरैव ग्राह्या । खर्वदर्पौ परौ ग्राह्यौ वियुक्तत्वात् । यदि सा दिनद्वयव्यापिनी भूत्वा ह्रासवती तदा पूर्वा ग्राह्या । यदि वृद्धिमती परैव । उक्तं च-

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ ग्राह्यौ हिंसा स्यात् पूर्वकालिकी ॥
खर्वा समतिथिर्ज्ञेया दर्पा वृद्धिमती स्मृता ।
क्षीयमाणा तिथिर्हिंसा निर्णयः प्रागुदिरीतः ॥

उपवासव्रतं प्रक्रम्य रोगादिना तदशक्तौ गुर्वनुज्ञया तस्यैकभक्तस्य सम्भावितत्वात्-

अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

## अथः नक्तनिर्णयः

तत्र [२६]नक्तशब्दो भोजनपरः । इति माधवीकारः ।

---

२४. नक्तनिर्णयोऽपि एकभक्तवदिति । यथा एकभक्ते गौणमुख्यव्याप्तीनिर्णायके तथा नक्तेपीत्यर्थः । तेन एकैकदिने एव व्याप्तौ मुख्यकालव्याप्तिरेव । दिनद्वयास्पर्शे गौणकालव्याप्तिरेव भावः ।

एकभक्तायाचितयोर्या विंशतिघटिकावधिः ।
सा तिथिः सकला ज्ञेया नक्ते सायाह्नसङ्गता ॥

इति मयूखकृदभिप्रायः । नि.सि. टिप्पटी. पृ- १६ ।

दिनार्द्धसमयेतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु ॥

अत्र दिनार्द्धस्योपरि सार्द्धमुहूर्त्तपरिमितः कालः । पञ्चधाविभागेन मध्याह्नस्योपरिभागे मध्याह्नस्याद्यभागः एकभक्तस्य मुख्यकालः । दिनार्द्धसमयेतीते सति समनन्तरभावित्वात् अस्तमयात् प्राचीनावशिष्टो गौणकालः । एवं व्यवस्थिते सति मुख्यकालव्यापिनी तिथिर्ग्रहीतव्या । ब्रह्मपुराणे-

मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः ॥

यदा पुनः एकस्मिन्नपि दिने कृत्स्नव्यापिनी लभ्यते किन्तु पूर्वा तिथिः स्वल्पं मध्याह्नं स्पृशति, उत्तरापि तावन्तमेव तदा खर्वत्वात् उत्तरैव ग्राह्या । खर्वदर्पौ परौ ग्राह्यौ वियुक्तत्वात् । यदि सा दिनद्वयव्यापिनी भूत्वा ह्रासवती तदा पूर्वा ग्राह्या । यदि वृद्धिमती परैव । उक्तं च-

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ ग्राह्यौ हिंसा स्यात् पूर्वकालिकी ॥
खर्वा समतिथिर्ज्ञेया दर्पा वृद्धिमती स्मृता ।
क्षीयमाणा तिथिर्हिंसा निर्णयः प्रागुदिरीतः ॥

उपवासव्रतं प्रक्रम्य रोगादिना तदशक्तौ गुर्वनुज्ञया तस्यैकभक्तस्य सम्भावितत्वात्-

अष्टौ तान्यव्रतध्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

## अथः नक्तनिर्णयः

तत्र [२४]नक्तशब्दो भोजनपरः । इति माधवीकारः ।

---

२४. नक्तनिर्णयोऽपि एकभक्तवदिति । यथा एकभक्ते गौणमुख्यव्याप्तीनिर्णायके तथा नक्तेपीत्यर्थः । तेन एकैकदिने एव व्याप्तौ मुख्यकालव्याप्तिरेव । दिनद्वयास्पर्शे गौणकालव्याप्तिरेव भावः ।

एकभक्तायाचितयोर्या विंशतिघटिकावधिः ।
सा तिथिः सकला ज्ञेया नक्ते सायाह्नसङ्गता ॥

इति मयूखकृदभिप्रायः । नि.सि. टिप्पटी. पृ- १६ ।

यत्तु इतरे- नक्तेषु प्रदोषव्याप्तिस्तिथिग्रहणेऽपि भानुवारे संक्रान्त्यादीनां गृहस्थस्यापि यत्र रात्रिभोजने निषेधस्तदा दिवैव कुर्यात्। तथा च भविष्यपुराणे-

ये त्वादित्यदिने ब्रह्मन् नक्तं कुर्वन्ति मानवाः ।
दिनान्ते तेऽपि भुञ्जीरन् निषेधाद्रात्रिभोजने ॥

रात्रिभोजनेऽपि घटिकात्रयमुत्तमः कालः ।
प्रदोषस्तमयादूर्ध्वं घटिकात्रयमिष्यते ॥

प्रदोषपरिमाणन्तु स्कन्दपुराणे-

उदयात् प्राक्तनी सन्ध्या घटिकात्रयमुच्यते ।
सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥
त्रिमुहूर्त्तप्रदोषस्याद्रवावस्तं गते सति ॥

इति वचनात् मुहूर्त्तत्रयमध्य एव सन्ध्यायां विहितत्वादविहिते निषेधयोगान्न भोक्तव्यम् । ननु षड्घटिकात्मके प्रदोषे पूर्वं घटिकात्रयं सन्ध्याशब्दवाच्यम् । तत्र-

चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥

इति स्मरणात् [२६]सन्ध्याकाले तु भोजननिषेधस्य तस्य पुरुषार्थत्वात् । व्रतार्थत्वेऽपि नक्षत्रदर्शनभोजनविधिना बाधिष्यते । यथा पुरुषार्थो हिंसा प्रतिषेधः । [२७]क्रत्वर्थे नाग्नीषोमीये पशुहिंसा विधानमेवेति ।

धवलसंग्रहे-

हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
ब्रह्मचर्यमधःशय्यां नक्तभोजी षडाचरेत् ॥

---

२६. सन्ध्या च दिनरात्र्योः सन्धौ मुहूर्त्तः ।
अर्द्धस्तमयात्सन्ध्या व्याक्तीभूता न तारका यावत् ।
तेजः परिहानिवशाद्भानोरर्द्धोदयं यावत् ॥ नि.सि. पृ-१५ ।

२७. सन्ध्यायां भोजननिषेधात् नक्तस्य वैधत्वाद्रागप्राप्तभोजनगोचरो निषेधः इत्युक्तं, तन्न, विधेर्निषेधाविरोधात्। अन्यथा कपिंजलानित्यत्र त्रित्वाधिकानां हिंसनं स्यात्।

## अथ अयाचितं निरूप्यते

तत्रेदं चिन्त्यते यदप्रार्थितमन्यत एव लब्धं तदयाचितं भोजनमेव।
तथा च यतिधर्मे उशना-

भिक्षासनसमुद्योगात् प्राज्ञेनापि निमन्त्रितम् ।
अयाचितं[२८] च तद्भैक्ष्यं भोक्तव्यं मनुरब्रवीत् ॥

अत्रापि एकभक्तादिवत् [२९]कालनियमोप्यस्ति इति माधवीकारः । कुतः अयाचितस्य नियमरूपत्वात् । सङ्कल्पोप्यहोरात्रेस्मिन् याचितमन्नं न भोज्यत इत्येवं कर्त्तव्यम् । तथा चानन्तभट्टीये एवं व्याख्यातम् । अयाचितमहर्द्वयवर्त्तिन्यां तिथौ या मध्याह्नव्यापिनी तस्यामेक-भक्तवदनुष्ठेयमिति ।

## अथ तिथिनिर्णयः

तत्र [३०]तिथिशब्दस्तनुविस्तारे इति धातोर्निष्पन्नः । तदुक्तं सिद्धान्तशिरोमणौ-

तन्यते कलया यस्मात्तस्मात्ताः तिथयः स्मृताः ।

सतानन्दरत्नमालायां-

---

२८. प्राजापत्यकृच्छ्रादौ सप्तमीव्रतादौ चायाचितव्रतं विहितम् । तस्य द्वावर्थौ । पर्युदासपरः प्रतिषेधरूपश्च तथा च प्राजापत्यकृच्छ्रव्याख्याने गौतमः-
अथापरं त्र्यहं कश्चन न याचते इति अत्रोपवासवदहोरात्रमेव विषयीकरोति । अतएव सङ्कल्पोऽपि अस्मिन्नहोरात्रे याचितमन्नं न भोक्तव्यमिति प्रतिषेधरूपः । याचितादन्यदयाचितस्य प्रयत्नलभ्यस्य परदत्तस्य भोजनं विवक्षते । निषेधस्य प्रसक्तिपूर्वकत्वात् याच्याशब्दस्य च परद्रवविषयत्वादयाचितशब्दोऽपि परद्रव्यमेव विषयीकरोति । तथाह बृहस्पतिः-

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमथादयाचितम् ।
त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरन् द्विजः ॥

इति व्रतस्यात्र पर्युदासरूपत्वम् । का.मा. पृ-११० ।

२९. कालशब्देन तिथिर्विवक्षितः न तु पूर्वाह्णादिकालविशेषः । तस्य परप्रयत्नत्वात् पराधीनत्वाच्च ।

३०. वर्द्धमानाया क्रीयमाणाया वा चन्द्रकलया तन्यते यः कालविशेषः सा तिथिः ।

तिथिनैकेन दिवसश्चान्द्रे माने प्रकीर्त्तितः ।
अहोरात्रेण चैकेन सावनो दिवसः स्मृतः ॥

## अथ शुद्धातिथिनिर्णयः

तथा च नारदीये-

आदित्योदयवेलायां आरभ्य षष्टिनाडिका ।
तिथिस्तु सा हि शुद्धा स्यात् सर्वतिथ्यो ह्ययं विधिः ।

स्कन्दपुराणे-

प्रतिपत्प्रभृतयः सर्वा उदयादुदयाद्रवेः ।
सम्पूर्णा इति विख्याता हरिवासरवर्जिताः ॥

## अथ विद्धातिथिनिर्णयः

तत्र माधवीकारः-

उदये पूर्वया तिथ्या विध्यते त्रिमुहूर्त्तकैः ।
सायं तूत्तरया तद्वत् न्यूनया तु न विध्यते ॥

विद्धा तु त्रिमुहूर्त्तैव न न्यूना वेधमर्हति । यथाह पैठीनसिः-

पक्षद्वयेपि तिथयस्थितिं पूर्वां तथोत्तराम् ।
[३१]त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं वेधः स्मृतः ॥

पूर्वेद्युरुदयानन्तरममवास्या त्रिमुहूर्त्ता चेत् सा प्रतिपदं विध्यति । परेद्युरस्तमयात् प्राक् द्वितीया त्रिमुहूर्त्ता चेत् सापि पूर्वां प्रतिपदं विध्यति। एवमुभयतो विद्धयोर्दिनद्वयवर्त्तिन्योः प्रतिपदोर्मध्ये किं पूर्वा ग्राह्या किं वा उत्तरेति विचार्यते । तत्र पूर्वा ग्राह्या । तदुक्तं पैठीनसिना-

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखीतिथिः ॥

सम्मुखत्वं स्कन्दपुराणे पठ्यते-

सम्मुखी नाम सायाह्नव्यापिनी दृश्यते यदा ।
प्रतिपत् सम्मुखी कार्या या भवेदपराह्निकी ॥

---

३१. तत्र मुहूर्त्तत्रयं दिनमानस्य पञ्चमभागरूपम् । तेन दिनमानवृद्धौ मुहूर्त्तमानवृद्धिः दिनमानह्रासे च मुहूर्त्तमानह्रासः तथा रात्रावपि ।

तथा च निगमे-

[३२]युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा ॥
प्रतिपद्व्याप्यमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥

तथा उत्तरविधानिषेधो बृहद्वसिष्ठेन पठ्यते-

द्वितीया पञ्चमी चैव दशमी च त्रयोदशी ।
चतुर्द्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥

अत्र वचने पञ्चम्योपवासविषये पञ्चमीतिथिः पूर्वां चतुर्थीं उत्तरां षष्ठीं च हन्ति । स्ववेधेन चतुर्थीषष्ठौ विद्धे नोपोष्य इति तात्पर्यार्थः । यत्तु 'प्रतिपत्स द्वितीया स्याद् द्वितीया प्रतिपद्युता' इति पुराणस्मरणे प्रतिपदोर्द्वितीया युक्तत्वं तीलकाशोककरवीरव्रतविषयमिति अनन्तभट्टीकारः । उपवासशब्दो व्रतपरः ।

## अथ तिथिविभागमाह

तत्र माधवीकारः-

प्रातःसङ्गवमध्याह्नापराह्णाः सायमित्यसौ ।
अत्राह्नः पञ्चधा भागो मुख्यो द्वित्रादिभागतः ॥

कालादर्शे च-

[३३]पञ्चधा [३४]पञ्चदशधा [३५]त्रेधा [३६]द्वेधा च वासराः ।
विभक्तं मुनयः प्राहुः तत्राद्यौ मम सम्मतौ ॥

---

३२. युग्मं द्वितीयातिथिः । अत्र द्वितयादि सप्तयुगेषु पूर्वतिथिरुत्तरविद्धा ग्राह्या । एवमुत्तरापि पूर्वविद्धा ग्राह्या । द्वितीयातृतीयोर्युग्मं मेलनं महाफलदायकं भवति । एतद्व्यस्तम् अर्थात् प्रतिपद्द्वितीययोः तृतीयचतुर्थ्योः इत्यादि रूपयोस्तिथ्योर्मेलनं महाघोरे प्रत्यवायजनकत्वेनात्यन्तभयङ्करमित्यर्थः । एवं पञ्चमी षष्ठ्यादिद्वन्द्वयोरपि बोध्यम् ।

३३. पञ्चधाविभागो यथा-

मुहूर्त्तत्रितयं प्रातः तावानेव तु सङ्गवः ।
मध्याह्नः त्रिमुहूर्त्तः स्यात् सर्वकर्मबहिष्कृतः ॥ का.सा. पृ- ३४ ।

अत्र पञ्चधाविभागस्य बहुस्मृतिकारसम्मतत्वात् प्राय एकमेव पक्षमाश्रित्य विधिनिषेधशास्त्राणि प्रवर्त्तन्ते । माधवीये-

सोदयत्रिमुहूर्त्तायां कुर्याद् दानं व्रतानि च ।
उभयत्र तथात्वे तु पूर्वेद्युस्तदनुष्ठितम् ॥
परत्रैव तथात्वं चेत् पूर्वा ग्राह्या तिथिक्षये ।

एवं नक्षत्रेपि-

उदयेत्रिमुहूर्त्तस्थं नक्षत्रव्रतदानयोः ।
दिनद्वये तथात्वे तु पूर्वं स्याद् बलवत्तरम् ॥

ननु यदि उभयत्र सोदयत्रिमुहूर्त्ता सद्भावभावः परदिने मुहूत्तद्वयं मुहूर्त्तमप्येकं वा वर्त्तते तत्र व्रतादिकमनुष्ठेयम् । तदुक्तं विष्णुधर्मोत्तरे-

व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।
सा तिथिः सकला ज्ञेया श्राद्धादौ त्वस्तगामिनी ॥

भविष्यपुराणे-

उदये सा तिथिर्ग्राह्या श्राद्धादौ चास्तगामिनीति ।

प्रवासनियम इति पाठः । यत्तु पद्मपुराणे-

व्रते स्नाने तथा नक्ते पितृकार्ये विशशेषतः ।
यस्यामस्तगतो भानुः सा तिथिः पुण्यभाग् भवेत् ॥

इति अस्तमयव्याप्तेरधिकारः सम्पूर्णतिथिविषयपरमिति ।

---

३४. पञ्चदशधा विभागो यथा-

रौद्रश्चैत्रश्च मैत्रश्च तथा शालटकः स्मृतः ।
सवित्रश्च जयन्तश्च गान्धर्वः कुतपस्तथा ॥
रोहिणश्च विरञ्चिश्च विजयो नैऋतस्तथा ।
महेन्द्रो वरुणश्चैव भेदः पञ्चदशः स्मृतः ॥ का.सा. पृ-३३ ।

३५. त्रेधा विभागो यथा-

ऊर्ध्वं सूर्योदयात् प्रोक्तं मुहूर्त्तानां च पञ्चकम् ।
पूर्वाह्णः पञ्चकः प्रोक्तो मध्याह्नस्तु ततः परम् ॥
अपराह्णः ततः प्रोक्तो मुहूर्त्तानां च पञ्चकम् ॥ का.सा. पृ- ३४ ।

३६. द्वेधा विभागो यथा-

आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णः ततः परम् । कालसारः- पृ-३४ ।

## अथ द्वेधातिथिनिर्णयः

तत्र गोभिलः-

खर्वो दर्पस्तथा हिंस्रस्त्रिविधं तिथिलक्षणम् ।
धर्माधर्मवशादेवं तिथिस्त्रेधा विवक्षिता ॥

ननु तिथयः क्षीयन्तां वर्द्धतां तथापि यत्तिथौ यद्विहितं तत्तस्मात्तु यस्मिन् यस्मिन् भागे क्रियन्तां किमिति निर्णीयत इत्याह तथा च बृद्धगार्ग्यः-

निमित्तं[३७] कालमादाय वृत्तिर्विधिनिषेधयोः ।
विधिः पूज्यः तिथौ तत्र निषेधः कालमात्रके ॥
तिथीनां पूज्यता नाम कर्मानुष्ठानयोग्यता ।
निषेधस्तु निवृत्तात्मा तस्मात् कालमपेक्षते ॥

निषेधस्य तैलाभ्यङ्गादिनिषेधस्य तिथिमात्रे सिद्धिर्भवति । तिथिभागविशेषापेक्षा तैलाभ्यङ्गादिनिषेधविषयकालपूर्वतिथिमात्रेण सिद्ध्यति इत्यर्थः । पूज्ये तिथौ परतिथियुक्तेन वा पूज्यायां तिथौ विधेर्नित्यनैमित्तिककाम्यनुष्ठानात् पूर्वस्य सिद्धिर्भवति इति अनन्तभट्टीये शिवरहस्ये-

अभ्यंगे चोदाधिस्नाने दन्तधावनमैथुने ।
जाते च निधने चैव तत् कालव्यापिनीक्रिया ॥

नारदीये-

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ।

## अथ खण्डातिथिनिर्णयः

तत्र वृद्धवसिष्ठेन-

अखण्डव्यापि मार्त्तण्डा यद्य खण्डा भवेत्तिथिः ।

---

३७-पूज्यकालमाश्रित्य विधेरनुष्ठानरूपपालनम् । मिषेधकालमाश्रित्य विधेरननुष्ठानरूपपालनमिति निष्कर्षः । तयोः पालनकालस्य नित्यत्वमित्यर्थः । यथा पस्मिन्नहनि निष्कर्षः तयोः पालनकालस्य नित्यत्वमित्यर्थः । यथा यस्मिन्नहनि एकादशी उदयमात्रव्यापिनी तत्र एकादशीमुपवसेदिति विधिबलात् तद्व्रते कृत्स्नमहो गृह्यते इति तिथेः पूज्यता । तैलाभ्यङ्गादिनिषेधे तु कालमात्रापेक्षा ।

तत् कर्मारम्भणं तस्यामनिष्टं गुरुशुक्रयोः ।

मरीचिरपि-

[38]अखण्डष्यापि मार्त्तण्डा सा सूर्योदयगा तिथिः ।
साप्यखण्डा व्रतानां स्यात्तत्रारम्भ समापने[2] ॥

सत्यव्रतोपि-

उदयस्था तिथिर्याहि न भवेद्दिनमध्यभाक् ।
सा खण्डा न व्रतानां स्यादारम्भश्च समापनम्[3] ॥

कालादर्शे च-

योदया तिथिमध्याह्नमखण्डा सा तिथिः स्मृताः ।
खण्डान्यथा व्रतारम्भं समाप्तिं चात्र वर्जयेत् ॥

अयमर्थः या तिथिरुदयादारभ्य मध्याह्नमेति मध्याह्नपर्यन्तं वर्त्तते इत्यर्थः । सा तिथिरखण्डा । अन्यथा उदयादाभ्य मध्याह्नं पर्यन्तं न वर्त्तते चेत् सा तिथिः खण्डा । अत्र तिथौ व्रतानामारम्भं समाप्तिं च वर्जयेदित्यर्थः ।

## अथ प्रतिपन्निर्णयः

तत्रेदं चिन्त्यते ज्योतिर्विदां चैत्रशुक्लादिव्यवहारः । तथा च शतानन्दः- युगवर्षमासादिभेदेन चैत्रशुक्लप्रतिपदमारभ्य तस्य प्रवृत्तेरिति । अतएव दैवज्ञचूडामणिः-

युगवर्षमासदिवसाः सम्यक् प्रवृत्तास्तु चैत्रशुक्लादेः ।

ब्रह्मपुराणे-

चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेहनि ।
शुक्लपक्षे समग्रन्तु तदा सूर्योदये सति ॥

प्रवर्त्तयामास तदा कालस्य गणनामपि वचनात् चैत्रशुक्लादिका मासा इत्यभिप्रायेण प्रथमं प्रतिपन्निर्णीयते । तथा च माधवीये-

---

३८. सूर्योदयादारभ्य या तिथिर्मध्याह्नपर्यन्तमेति गच्छति सा अखण्डा, अन्यथा खण्डा ।
विष्णुधर्मोत्तरे-
व्रतोपवासस्नानादौ घटिकैका यदा भवेत् ।
सा तिथिः सकला ज्ञेया श्राद्धादौ त्वस्तगामिनी ॥ का.सा. पृ-३३ ।

[३९]प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला ।

अयमर्थः चन्द्रस्य पञ्चदशेसु भागेषु प्रथमभागो दर्शनयोग्यो न भवति । सोयं भागः प्रथमकलेत्यभिधीयते । तत्कलानिष्पत्तिपरिमितः कालः प्रतिपत्तिथिर्भवति । तदुक्तं ज्यातिःशास्त्रे- "दिने.दिने कलावृद्धिः पौर्णमास्यान्तु पूर्णता ।" अत्र युग्मवाक्ये प्रतिपद्यप्यमावास्या इति । शुक्लपक्षेमावास्या विद्धत्वम् उपवासे विहितम् । तथा-

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः ॥

इति पैठीनसिस्मरणात् । माधवीये-

प्रतिपत्सम्मुखी कार्या या भवेदपराह्णिकी ।
पौर्वाह्णिकी च कर्त्तव्या द्वितीया यदि तादृशी ॥

## अथ द्वितीयानिर्णयः

सा च परविद्धा ग्राह्या । तथा विष्णुधर्मोत्तरे-

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्द्दशी ।
त्रयोदशी चतुर्थी च उपोष्याः स्युः परान्विताः ॥

उपवासशब्दो व्रतपरः । यत्तु-

प्रतिपत्सद्वितीया स्यात् द्वितीया प्रतिपद्युता ॥

इति तत् [४०]यमद्वितीयाविषयम् । तस्यां हि भगिनीभिर्भ्रातरो भोज्यन्ते[४१]।

---

३९. पञ्चदशानां कलामेकैकां कलां वह्न्यादयः प्रजापत्यन्ताः पञ्चदशदेवताः क्रमेण पिबति । तत्र वह्निपेया कला प्रथमा इति ।

४०. अत्राष्टधा विभक्तदिवसस्य पञ्चमभागो मुख्यकर्मकालः । भोक्तव्यं पुष्टिवर्द्धनम् इति । फलश्रवणेन भोजननियमस्य प्राधान्यात् पञ्चमभागस्य भोजनकालत्वात् । तिथिद्वैधे- द्वितीयाप्रतिपद्युता इत्युक्तेः पूर्वविद्धा तिथिर्ग्राह्या इति तन्न । अस्या उक्तेः कृष्णपक्षविषयत्वेन निर्णयात् । तथा च युग्मवाक्यात्परविद्धा ग्राह्या । ज्योतिःशास्त्रे- तथा यमद्वितीयायां यात्रायां मरणं ध्रुवम् । इति कालसारः-पृ-५० ।

४१. अन्नं दत्वा भगिन्या प्रार्थनीयः-

भ्रातः तवानुजाताहं भुंक्ष्व भक्तमिदं शुभम् ।

नैव व्रतादिविषयमिति अनन्तभट्टकारः ।

अकुर्वतां विनश्यन्ति भ्रातरः सप्तजन्मगा । इति ।

## अथ तृतीयानिर्णयः

तत्र युग्मशास्त्रेण पूर्वविद्धानिषेधवाक्यमाह स्कन्दपुराणे-

द्वितीयासंयुता तात पूर्वधर्मादि लुप्यते ।
विधवात्वं दुर्भगत्वं भवेन्नास्त्यत्र संशयः ॥

आपस्तम्बोऽपि-

द्वितीयाशेषसंयुक्तां तृतीयां कुरुते तु यः ।
स याति नरकं घोरं कालसूत्रं भयङ्करम् ॥

अत्र पुर्वविद्धा न ग्राह्या । उत्तरविद्धा विधायकत्वं तु आपस्तम्बेन पठ्यते-

चतुर्थीसंयुता या च सा तृतीया फलप्रदा ।
अवैधव्यकरी स्त्रीणां पुत्रसौभाग्यवर्द्धिनी ॥

उत्तरविद्धाविधायकत्वं रम्भाव्यतिरिक्तपरम् गम्यते । रम्भाव्रतविषयत्वं ब्रह्मवैवर्त्ते पठ्यते ।

[४२]रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम ।
अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते ॥

इति माधवीकारः । स्कन्दपुराणे-

तृतीया तु न कर्त्तव्या द्वितीयासंयुता तिथिः ।
या करोति विमूढा स्त्री पुरुषो वा शिखिध्वज ॥

उत्तरविद्धा विधायकत्वं ब्रह्मवैवर्त्ते दर्शितम्-

चतुर्थीसंयुता या च सा तृतीया फलप्रदा ।
अवैधव्यकरी स्त्रीणां पुत्रसौभाग्यवर्द्धिनी ॥

---

प्रीतये यमराजस्य यमुनायाः विशेषतः ॥
ज्येष्ठा चेदग्रजाताहमित्यूहम् । कालसारः -पृ- ५० ।

४२. रम्भाव्रते सूर्यास्तात् पूर्वं त्रिमुहूर्त्तं द्वितीयायुक्ता तृतीया ग्राह्या । दिनद्वये तथात्वे तु पूर्वा युग्मवचनात् । इति । का.दी. पृ- २३ ।

## अथ चतुर्थीनिर्णयः

सा च युग्मादिशास्त्रेण चतुर्थी परविद्धा ग्राह्या । वृद्धवसिष्ठोपि-

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुताः पराः पूर्वेण संयुताः ॥

ननु परविद्धोपवासः क्वचित् प्रतिसिद्ध्यते । तथा बृहद्वसिष्ठः-

द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ॥

अयमर्थः- पञ्चमीवेधेन पूर्वां चतुर्थीम् उत्तरां षष्ठीम् उपवासविषये हन्ति। अतः पञ्चमीविद्धायां चतुर्थ्यां नोपोषणम् एतच्च कृष्णपक्षविषयपरम् । पञ्चमीयुक्तोपवासविधानन्तु शुक्लपक्षविधानमिति । गणेश्वरव्रत-सम्बन्धेऽपि तृतीयायुक्तयां चतुर्थी विधानात् । अन्यदेव व्रतसम्बन्धिनी चतुर्थी परैवोपोष्या इति अनन्तभट्टकारः ।

कर्मकालो विनायकव्रतस्य मध्याह्नः ।

प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप ।
विनायकव्रते कार्या पूर्वविद्धा सदा तिथिः ॥
विनायकव्रते कार्या सर्वमासेषु षण्मुख ।
चतुर्थी तु जया युक्ता गणनाथसुतोषिणी ॥

विनायकव्रतानुष्ठाने चतुर्थी मध्याह्नव्यापित्वं मुख्यम् । तदाह बृहस्पतिः-

चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।
मध्याह्नव्यापिनी चेत्स्यात् परतश्चेत् परेहनि ॥

लिङ्गपुराणे-

चतुर्थ्यान्तु गणेशस्य गौर्याश्चैव विधानतः ।
पूजां कृत्वा लभेत् सिद्धिं सौभाग्यं च नरः क्रमात् ॥

नारदीये-

माघशुक्लचतुर्थ्यान्तु गौरीमाराधयेद् बुधः ।
चतुर्थी वरदा नाम गौरीं तत्र प्रपूजयेत् ॥

स्कन्दपुराणे-

ज्येष्ठा च वटसावित्री तथानङ्गत्रयोदशी ।

विनायकचतुर्थी च कर्त्तव्या सम्मुखी तिथिः ॥

माधवीकारेणाप्ययं पक्षः स्वीकृतः ।

## अथ पञ्चमीनिर्णयः

तत्र हारितः-

चतुर्थीसंयुता कार्या पञ्चमी परया न तु ।
दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथासिते ॥

तस्मात् हारीतवचनेन पञ्चमी पूर्वविद्धा ग्राह्या । तथा च स्कन्दपुराणे-

पञ्चमी च तथा कार्या चतुर्थीसंयुता विभो ।

यत्तु- पञ्चमी च प्रकर्त्तव्या षष्ठीयुक्ता तु नारद ॥

इति आपस्तम्बेनोक्तम् । तत् स्कन्दोपवासविषयपरम् सर्वत्र पञ्चमी पूर्वा ग्राह्या । यतः स्कन्दव्रतपरेति माधवीकारः । अत्र स्कन्दोपवासे पञ्चमी परविद्धा अन्यत्र पूर्वविद्धेति ।

## अथ षष्ठीनिर्णयः

तत्र स्कन्दव्रते पूर्वविद्धा व्रतान्तरे परविद्धा इति । तत्र स्कन्दषष्ठयां पूर्वविद्धत्वमाह वसिष्ठः-

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रि चतुर्द्दशी ।
एताः पूर्वयुताः कार्याः तिथ्यन्ते पारणं भवेत् ॥

तथा रव्यादिव्रते परविद्धा ग्राह्या । तथा च विष्णुधर्मोत्तरे-

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विता ॥

ब्रह्मवैवर्त्ते-

न हि षष्ठी नागविद्धा कर्त्तव्या च कदाचन ।
नागविद्धा तु या षष्ठी कृता पुण्यक्षया भवेत् ॥
सप्तम्या सह कर्त्तव्या महापुण्यफलप्रदा ।

पुण्यक्षयो यस्यां सा पुण्यक्षया । यदा तु कदाचित्तिथिक्षयवशादुत्तरविद्धा न लभ्यते तदा पूर्वविद्धा कर्त्तव्या । तदाह वसिष्ठः-

एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।
पूर्वविद्धा तु कर्त्तव्या यदि न स्यात् परेहनि ॥

## अथ सप्तमीनिर्णयः

तत्र सर्वासु देवतासु व्रतेषु शुक्लकृष्णयोरुभयोरपि सर्वासु सप्तमीषु पूर्वविद्धैव ग्राह्येति माधवीकारः । उक्तं च भविष्यपुराणे-

षष्ठी तु सप्तमी तात अन्योन्यं तु समाश्रिता ।
पूर्वविद्धा द्विजश्रेष्ठ कर्त्तव्या सप्तमी तिथिः ॥

स्कन्दपुराणे-

कर्त्तव्या सप्तमी तत्र षष्ठी यत्र च सर्वदा ।
षष्ठी च सप्तमी यत्र तत्र सन्निहितो रविः ॥

उत्तरविद्धाप्रतिषेधः स्कन्दपुराणे पठ्यते-

षष्ठ्येकादश्यमावास्य पूर्वविद्धा तथाष्टमी ।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम् ॥

यदा पूर्वेद्युरस्तमयपर्यन्ता षष्ठी परेद्युस्तिथिक्षयेणास्तमयादर्वागष्ठमी त्रिमुहूर्त्ता तदा पूर्वविद्धाया अलाभादुत्तरविद्धायाश्च प्रतिसिद्धत्वात् कुत्रानुष्ठानं क्रियते इति चेत्, तत्र [४३]परेद्युरनुष्ठानम् अलाभे पूर्वविद्धायाः परविद्धा गृह्यतामिति माधवीकारः ।

युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।
रवेरुदयमीक्ष्यन्ते न तत्र तिथियुग्मता ॥

## अथ अष्टमीनिर्णयः

तत्र कृष्णाष्टमी पूर्वविद्धा ग्राह्या शुक्लाष्टमी परविद्धा प्राह्येति । तथा च निगमः-

कृष्णपक्षेष्टमी यत्र कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचित् ॥

तथा च नारदीये-

कृष्णाष्टमी तथा षष्ठी तृतीया चैव पैतृकी ।

---

४३. शेषिलोपन्यायत्वादुत्तरविद्धा गौणकालत्वेन स्वीकर्त्तव्या । अस्ति चात्र दृष्टान्तः । स्कन्दव्यतिरिक्तव्रतेषु पूर्वविद्धायाः षष्ठ्यानिषेधमुलंघ्य यदि न स्यात् परेहनि इति वाक्येन पूर्वविद्धा ग्रहीता । तथा रम्भाव्यतिरिक्तगौरीव्रतेषु द्वितीयायुता स्वीकर्त्तव्या । तेनैव न्यायेनात्राप्यष्टमी विद्धायाः स्वीकारः । इति । का.मा. पृ-१५७ ।

बृहत्तपा तथा ब्रह्मन् कर्त्तव्या सम्मुखीतिथिः ॥

तथा च शुक्लपक्षे परविद्धा तत्रैव पठ्यते-

शुक्लपक्षेष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥
उपवासादि कार्येषु एष धर्मः सनातनः ॥

ननु यद्यपि शुक्लपक्षेष्टम्याः परविद्धत्वम् उक्तम् । तद् दुर्गाष्टमीव्यतिरिक्तविषयम् । दुर्गाष्टमी तु शुक्लपक्षेपि पूर्वविद्धैव तत्रानन्तभट्टीये-

श्रावणी दुर्गनवमी तथा दूर्वाष्टमीतिथिः ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥

## अथ नवमीनिर्णयः

सा च पूर्वविद्धा ग्राह्या । वसुरन्ध्रयोर्युग्माभिधानात् । तथा च पद्मपुराणे-

अष्टम्या नवमीविद्धा नवम्या चाष्टमीयुता ।
अर्द्धनारीश्वरप्राया उमामाहेश्वरीतिथिः ॥

उत्तरविद्धा निषेधस्तु ब्रह्मपुराणे पठ्यते ।

अष्टमी नवमी विद्धा कर्त्तव्या फलकाङ्क्षिभिः ।
न कुर्यात् नवमीं तात दशम्या तु कदाचन ॥
नवमी पूर्वविद्धैव पक्षयोरुभयोरपि ॥ इति माधवीकारः ।

## अथ दशमीनिर्णयः

सा च किं पूर्वविद्धा किं परविद्धा वेति । अत्र पूर्वविद्धा ग्राह्या । तथा च स्कन्दपुराणे-

दशमी चैव कर्त्तव्या सदुर्गा द्विजसत्तम ।
सदुर्गा नवमीमिश्रा ॥

मैवम् । पक्षद्वयेऽपि पूर्वविद्धा स्वीकारे सति-

सम्पूर्णा दशमी कार्या परया पूर्वयाथवा ।
युक्ता न दोषिता यस्मात्तिथिः सा सर्वतोमुखी ॥

यदा सम्पूर्णातिथिर्दोषरहिता तदा विद्धापि प्रतिपत् सम्मुखी कार्या

इत्यादौ तिथेर्मुखं पूज्यम् । तथा-

शुक्लपक्षे[४४] तिथिग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिग्राह्या यस्यामस्तमितो रविः ॥

मार्कण्डेयवचनात् दशम्योः पूर्वत्तरोविद्धयोः पक्षभेदेन व्यवस्था द्रष्टव्या। तथा च माधवीकारेण कारिकायां लिखितम् ।

कृष्णा पूर्वोत्तरा शुक्ला दशम्येव व्यवस्थिता ॥

## अथ एकादशीनिर्णयः

तत्र एकादश्युपवासस्य जयन्तीव नित्यकाम्यतया द्वैरूप्यम् । तत्र नित्यवाक्यं गारुडपुराणे-

उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि ।

तथा अकरणे दोषः श्रूयते सनत्कुमारः-

न करोति हि यो मूढ एकादश्यामुपोषणम् ।
स नरो नरकं याति रौरवं तमसावृतम् ॥
एकादश्यां मुनिश्रेष्ठ यो भुङ्क्ते नष्टचेतनः ।
प्रतिमासं च निरयं याति नास्त्यत्र संशयः ॥
निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः ।
एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदितः ॥

तथा- मद्यपानां मुनिश्रेष्ठ पातैव नरकं व्रजेत् ।
एकादश्यन्नकामस्तु पितृभिः सह मज्जति ॥

विष्णुधर्मोत्तरे-

परमापदमापन्नो हर्षे वा समुपस्थिते ।
सूतके मृतके चैव न त्यजेद् द्वादशीव्रतम् ॥

नारदीये-

यानि कानि च पापानि ब्रह्महत्यादि कानि च ।
अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ॥

---

४४. शुक्लदशम्यां सोदयत्रिमुहूर्त्तवेधस्य प्राशस्त्यादेकादशीविद्धा ग्राह्या । कृष्णदशम्यान्तु त्रिमुहूर्त्तात्मकास्तमयवेधस्य प्राशस्त्यान्नवमीविद्धा ग्राह्या ।

स्कान्दे-

मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा ।

एकादश्यान्तु यो भुङ्क्ते पक्षयोरुभयोरपि ॥

प्रायश्चित्तप्रकरणे स्मृत्यन्तरे च-

अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा ।

एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥

व्रतभङ्गे दोषः पठ्यते विष्णुरहस्ये-

समादाय विधानेन द्वादशीव्रतमुत्तमम् ।

तस्य भङ्गं नरः कृत्वा रौरवं नरकं व्रजेत् ॥

परिगृह्य व्रतं सम्यग् एकादश्यादिकं नरः ।

न समापयते तस्य गतिः पापीयसी भवेत् ॥

फलश्रवणं च केषुचित् वचनेषु विस्पष्टम् । तत्र कात्यायनः-

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

कूर्मपुराणे-

वदन्तीह पुराणानि भूयो भूयो वरानने ।

न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥

वीप्सामाह सनत्कूमारः-

पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम् ।

तदेवं नित्यशब्दादिभिर्हेतुभिरुपवासस्य नित्यत्वं सिद्धम् । काम्यत्वं च सायुज्यादिफलश्रवणादवगम्यते । तदुक्तं विष्णुरहस्ये-

यदिच्छेद्विष्णुसायुज्यं सुतान् सम्पदमात्मनः ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

काम्यत्वं सिद्धम् । [४५]एतद्विविदिषाधिकरणन्यायेनात्रापि सकृदेवोपवासं

---

४५. विविदिषाधिकरणस्य संग्राहतावेतौ श्लोकौ भवतः-

विद्यार्थमाश्रमार्थं च द्विः प्रयोगोथवा सकृत् ।

प्रयोजनविभेदेन प्रयोगोपि विभिद्यते ॥

श्राद्धार्थभुक्त्या तृप्तिः स्याद्विद्यार्थेनाश्रमस्तथा ।

अनित्यनित्यसंयोग उक्तिभ्यां खादिरे मतः ॥

कुर्वतः काव्यप्रयोगो नित्यप्रयोग इति उभयं सिद्ध्यति । काम्यप्रयोगेणैव नित्यप्रयोगोपि सिद्ध्यतीत्यर्थः । तथा च स्मृतिः-

काम्येपि नित्यसिद्धिस्यात् प्रसङ्गेनोभयात्मके ।

## अथ दशमीविद्धैकादश्युपवासनिषेधः

तत्र नारदः-

दशम्येकादशी यत्र गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

न केवलं पुत्रविनाशमात्रम् । किन्तु बहुतरदोषोप्यस्ति । तथा च ब्रह्मवैवर्त्ते-

दशमीशेषसंयुक्तां यः करोति विमूढधीः ।
एकादशीफलं तस्य न स्याद् द्वादशवार्षिकम् ॥

ईदृशानि वाक्यानि बहूनि सन्ति । ग्रन्थविस्तरभयान्न लिखितानि । वह्निपुराणे-

दशम्येकादशी यत्र सा नोपोष्या सदा तिथिः ।
श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा ॥

अत्रायं संक्षेपः । एकादशी द्विविधा । नित्या काम्या च । यो गृही नियमतायाः करोति तेन विद्धया उपवासः कर्त्तव्यः । तदुक्तं वायुपुराणे-

एकादशी दशाविद्धा परतोपि न वर्त्तते ।
गृहिभिः यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥

यश्च काम्यतया करोति तेनोपवासो न कर्त्तव्यः । तदुक्तं नारदेन-

दशम्येकादशी विद्धा गान्धार्या समुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

तदा द्वादशीमुपोष्य त्रयोदश्यां पारणं कर्त्तव्यम् । तथा च स्मृत्यन्तरे-

एकादशी द्वादशी च द्वावेतौ मम वासरौ ।
यत्र पूर्वा तु विद्धा स्यात् तत्रोपोष्या परा तिथिः ॥

---

अयमर्थः- तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन इति श्रुतिवचनेन परमात्मविद्यायां यज्ञादयो विहिताः । गृहस्थाद्याश्रमधर्मत्वन्तु यज्ञादीनां सर्वश्रुतिस्मृतिषु प्रसिद्धम् । इति । कालमाधवः- पृ-१९४ ।

गोभिलः-

कलार्द्धेनापि विद्धा स्याद्दशम्येकादशीं विना ।
तथाप्येकादशीं त्यक्त्वा द्वादशीं समुपोषयेत् ॥
तत्र क्रतुशतं पुण्यं त्रयोदश्यां च पारणम् ॥

एतद् पुत्रवद् गृहिविषयं तस्यैव दिनक्षय उपवासनिषेधात् । तदुक्तं पितामहेन-

दशमी लेशमात्रं च एकादश्याः क्षयो भवेत् ।
द्वादश्यामुपवासश्च त्रयोदश्यान्तु पारणम् ॥
दशम्येकादशी विद्धा शुद्धा च द्वादशी परा ।
उपोष्या द्वादशी चैव त्रयोदश्यान्तु पारणम् ॥
एकादशीक्षयदिने उपवासं करोति यः ।
तस्य पुत्राः विनश्यन्ति मघायां पिण्डदो यथा ॥

अस्यार्थः- केवलमेकादशीदिनक्षये पुत्रवद्गृहस्थव्यतिरिक्तानां विद्धोपवासः कर्त्तव्यः । इति अनन्तभट्टकारप्रभृतयः ।

देवलः-एकादश्यां न भुञ्जीत [४६]पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोयं शुक्लामेव सदा गृही ॥

एवकारः कृष्णैकादश्यामुपवासनिषेधपरः । तथा च गौतमः-

आदित्येह्नि संक्रान्त्यामसितैकादशीषु च ।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद् गृही ॥

ननु नैमित्तिककाम्योपवासौ तु कृष्णायामपि कर्त्तव्यौ । तथा च स्मृत्यन्तरे-

शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवपोष्या गृहस्थेन नान्या कृष्णा कदा च न ॥

---

४६. एकादश्यां भोजननिषेधः सर्वान् प्रति अविशेषः । व्रताङ्गनियमपालने तु गृहस्थं प्रति कृष्णानिषेधः इति निष्कर्षः । कृष्णापि शयनी बोधिनी मध्यगा उपोष्या तदुक्तम्-

शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदा च न ॥ का.मा. पृ- २११

कालादर्शे-

एकादशीमुपवसेदेवं गृही च केचन ।
ऊचुस्तन्न गृहस्थश्च शुक्लामेवेत्यनुक्रमात् ॥
विधवायाः वनस्थस्य यतेश्चैकादशीद्वये ।
उपवासो गृहस्थस्य शुक्लायामेव पुत्रिणः ॥
भुक्तौ निषेधः कृष्णायां सिद्धिस्तस्यार्थतो व्रते ॥

विद्याकरपद्धतौ अनन्तभट्टीये च वाक्यरत्नावल्यां सर्वेषां सर्वदा पक्षद्वयेपि भोजनवर्जनम् । गृहस्थेतरेषां पक्षद्वयेपि व्रतं च । गृहस्थानां शुक्लास्वेव । शयनीबोधनीमध्ये कृष्णासु च । अपुत्रवद् गृहस्थस्य व्रतम् । पुत्रवांस्तु तास्वपि किञ्चित् भक्षणपूर्वकं व्रतमपि । बोधन्यामुत्तराकृष्णासु पुत्रवदपुत्रयोर्भोजननिषेधमात्रमेव ।

स्कन्दपुराणे-

असक्तावुपवासस्य भक्ष्यं किञ्चित् प्रकल्पयेत्[४७] ।

वायुपुराणे-

उपवासनिषेधे तु भक्ष्यं किञ्चित् प्रकल्पयेत् ।
न दुष्यत्युपवासेन उपवासफलं लभेत् ॥

भक्ष्यकल्पना तत्रैवोक्ता-

नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरं च ॥

अधुना एकादश्याधिक्ये नारद आह, स्मृत्यन्तरे च-

एकादशी यदा पूर्णा परतः पुनरेव सा ।
पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणम् ॥

द्वादश्याधिक्ये व्यास आह विष्णुरहस्ये-

एकादशी कला प्राप्ता येन द्वादश्युपोषिता ।
तुल्या क्रतुशतेन वै त्रयोदश्यान्तु पारणम् ॥

---

४७. उपवासासामर्थ्ये तु मार्कण्डेयकौर्मयोः-

एकभक्तेन नक्तेन तथैवायाचित्तेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् ॥ नि.सि. पृ-३२

एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत् परमां गतिम् ॥

एतद् वैष्णवविषयम् । उभयोराधिक्ये नारद आह-

सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि ॥

यत्तु कृत्यकौमुद्यां- उभयाधिक्ये उपवासद्वयविधानम् । विधवां प्रति लिखितं तत् बहुनिबन्धकारैरलिखितत्वात्प्रत्यक्षशास्त्रविरुद्धत्वान्नादृतम्।

शुद्धाप्येकादशी त्याज्या विद्ध्यते द्वितीयं यदि ।
द्वादश्यां पारणालाभे पूर्वैव परिगृह्यते ॥
अरुणोदयवेलायाः प्राक् मुहूर्त्तद्वयान्विता ।
सा शुद्धैकादशी प्रोक्ता विद्धा त्वन्या प्रकीर्त्तिता ॥

सर्वस्मृतिकारसम्मतत्वात् शिष्टसमाचाराच्च सकृदुपवासः कर्त्तव्य एव। एकादश्यां श्राद्धकृतो नियममाह अनन्तभट्टीये-

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यात् आघ्राय पितृसेवितम् ॥
मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा ।
अभ्यर्च्य पितृदेवांश्चाजिघ्रेत् पितृसेवितम् ॥

नित्य उपवासः एकादश्युपवासः ।

श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पितृसेवितम् ।
हविर्देवा न गृह्णान्ति काव्यं च पितरस्तथा ॥

तदेकादश्युपवासव्यतिरिक्तविषयम् । यत्तु देवलादिषु-

दशम्यामेकभक्तस्तु मांसमैथुनवर्जित ॥

इति काम्यविषयम् । नित्ये तु-

अथ नित्योपवासी चेत् सायं प्रातः भुजिक्रिया ॥

इति माधवीकारः । पारणाहे द्वादश्यां कलाद्वयं कलात्रयं वाप्युदयादुपरि सम्भवति तदा द्वादशी काल एव पारणं कार्यम् ।

तदुक्तं कालादर्शे-

द्वादश्यां पारणं कुर्यात् नित्ये काम्येप्युपोषिते ॥

अतएव विद्याकरपद्धतौ-

पारणेहनि सम्प्राप्ते द्वादशीं यो व्यतिक्रमेत् ।
त्रयोदश्यान्तु भुञ्जानो शतजन्मनि नारकी ॥

नारदीये-कलाद्वयं त्रयं वापि द्वादश्यां न त्वतिक्रमेत् ।
पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ॥

द्वादशी काले यदि पारणं तदा ततः प्रागेव सर्वाः क्रियाः कर्त्तव्याः ।
तदुक्तं स्कान्देपुराणे-

यदा भवेदतीवाल्पा द्वादशी पारणादिने ।
उषः काले द्वयं कुर्यात् प्रातर्माध्याह्निकं तदा ॥
कालार्द्धं द्वादशीं दृष्ट्वा निशीथादूर्ध्वमेव हि ।
आमध्याह्नाः क्रियाः सर्वाः कर्त्तव्या शम्भुशासनात् ॥

तत्र पारणासम्भवेद्भिरेव पारणं कुर्यात् । तथा च-

अशक्तौ पारणस्यापि कुर्यादुदकपारणम् ।
शक्तस्तु पारणं कुर्वन् नरोधर्मेण लिप्यते ॥

कात्यायनः-

सन्ध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः ।
अद्भिस्तु पारयित्वा तु नैत्तिकान्ते भुजिर्भवेत् ॥

देवलः-

संकटे[४८] विषमे प्राप्ते द्वादश्यां पारयेत् कथम् ।
अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृत् ॥

यदा कलापि द्वादशी नास्ति तदा त्रयोदश्यामपि सर्वेषूपवासेषु पूर्वाह्णे पारणं भवेदिति वचनात् पूर्वाह्णे पारणं कुर्यात् । तदुक्तं नारदीये-

त्रयोदश्यां हि शुद्धायां पारणं पृथिवीफलम् ।
शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयम् ॥

पारणं च नैवेद्यतुलसीमिश्रितं कुर्यात् । तदुक्तं स्कन्दपुराणे-

कृत्वा चैवोपासं तु योश्नाति द्वादशीदिने ।

---

४८. जलपानस्याशितानशितरूपत्वात्तेन सङ्कटसमाधानं भवति ।
अशितानशिता यस्मादापो विद्वद्भिरीरिता ॥ इति वचनात् ।

नैवेद्यं[४९] तुलसीमिश्रं हत्याकोटिविनाशनम् ॥

ब्रह्माण्डपुराणे-

यत् किञ्चित् कुरुते पापं कोटिजन्मनि मानवः ।
कृष्णस्य जागरो रात्रौ तानि दह्यति पार्वति ॥
कन्यासहस्रं विधिवद् ददाति स्वलङ्कृतं विप्रकरेषु भक्त्या ।
गवां सहस्रं कुरु जाङ्गलेषु तेषां फलं जागरणेन विष्णोः ॥

## अथ द्वादशीनिर्णयः

सा च युग्मादिशास्त्रेण पूर्वविद्धा ग्राह्या । तथा च स्कन्दपुराणे-

द्वादशी च प्रकर्त्तव्या एकादश्या युता विभो ।
सदा कार्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः ॥

तथा च उत्तरविद्धानिषेधश्चतुर्थीनिर्णये लिखितः । अतएव द्वादशी पूर्वविद्धैव व्रतेषु निखिलेष्वपीति माधवीकारः ।

## अथ त्रयोदशीनिर्णयः

तत्र कृष्णत्रयोदश्याः परविद्धत्वं निगमे पठ्यते ।

षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी ।
एताः परयुताः पूज्याः पराः पूर्वयुतास्तथा ॥

यदा तु परविद्धा कृष्णपक्षे न लभ्यते तदा पूर्वविद्धा ग्राह्या । तदाह वसिष्ठः-एकादशी तृतीया च षष्ठी चैव त्रयोदशी ।

पूर्वविद्धापि कर्त्तव्या यदि न स्यात् परेहनि ॥

तथा च शुक्लपक्षे पूर्वविद्धात्वमाह ब्रह्मवैवर्त्ते-

त्रयोदशी प्रकर्त्तव्या द्वादशीसहिता मुने ॥

यद्यप्यत्र शुक्लकृष्णभेदो नास्ति तथापि कृष्णत्रयोदश्यां परविद्धायां वाचनिकत्वात् पूर्वविद्धायाः शुक्लपक्षविषयत्वं परिशिष्यते । अनङ्गत्रयोदशी पूर्वविद्धा ग्राह्या । तथा च माधवीये-

अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुता ॥

इति सायंकालीनत्रिमुहूर्त्तव्यापित्वे पूर्वविद्धायां प्राप्तायां प्रतिपद्

---

४९. नैवेद्यं तुलसीमिश्रितमिति पारणसमये प्रथमतः भोजनपदार्थं तुलसीदलेन सह भगवते वासुदेवाय समर्प्य पारणं कर्त्तव्यमिति ।

इवापराह्णसम्बन्धोपेक्षित इति द्रष्टव्यम् । तदुक्तं स्कन्दपुराणे-

त्रयोदशी प्रकर्त्तव्या या भवेदापराह्णिकी ॥

शुक्ला त्रयोदशी पूर्वा परा कृष्णत्रयोदशीति माधवीकारः ।

## अथ चतुर्दशीनिर्णयः

तत्र शुक्ल चतुर्दशी द्विजैरुपोष्या कृष्णा पूर्वेति । तथा च व्यासः-

शुक्ला चतुर्दशी ग्राह्या परविद्धा सदा व्रते ॥

तथा च निगमे पठ्यते-

शुक्लपक्षेष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या परसंयुता ॥

तथा च कृष्णचतुर्दशी पूर्वयुतैव ग्राह्या । आपस्तम्बः-

कृष्णपक्षेष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्त्तव्या परविद्धा न कर्हिचित् ॥

## अथ पञ्चदशीनिर्णयः

तत्र पञ्चदशीशब्देन पौर्णमास्यमावास्या चेति द्विधा प्रतीयते । तत्र तावच्चैत्रशुक्लादिकामासा इत्यभिप्रायेण प्रथमं पौर्णमासी निर्णीयते । तत्र गोभिलः-

यः परो विप्रकर्षः सूर्यचन्द्रमसोः सा पौर्णमासी ।

पौर्णमास्यपि द्विविधा । तथा च कुथुमशाखायां पठ्यते-

या पूर्वा पौर्णमासी सा अनुमतिः, या उत्तरा सा राका ॥

ब्रह्मपुराणे-

ह्रासे त्वनुमतिर्ग्राह्या पर्वकाले मनीषिभिः ।
वृद्धौ साम्येपि राका स्याच्चन्द्रसूर्यक्षये क्षयात् ॥

उपवासविषये युग्मशास्त्रेण पूर्वविद्धात्वं श्रूयते । पद्मपुराणे-

पूर्वविद्धा तु कर्त्तव्या सप्तमीव्रतिभिर्नरैः ।
पौर्णमास्या महीपाल परया नियमाङ्गता ॥

तथा चाकरणे दोषो नारदेन पठ्यते ।

दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥

तथा च परविद्धाया ग्राहकत्वं क्वचित् पठ्यते । बृहस्पतिः-

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

[५०]उपवासशब्दोऽत्र व्रतपरः । एवं परस्परविरोधे सति व्यवस्था तत्र ब्रह्मवैवर्त्ते पठ्यते-

पूर्वविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा ।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥

## अथ अमावास्यानिर्णयः

योयं पौर्णमासीनिर्णयः सोयममावास्यानिर्णयोवगन्तव्यः । यत्र दिने चन्द्रमाः न दृश्यते सा अमावास्या[५१] । तस्यामहर्द्वयवर्त्तिन्यामपराह्ण-व्यापिनी ग्राह्या । अपराह्णः पितृणामिति वचनात् । तदाह कात्यायनः-

अपराह्णे पिण्डपितृयज्ञश्चतुर्दश्यमावास्ययोः ।

छान्दोगपरिशिष्टे-

अष्टमेंशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमांशे च पुनः किल भवेदणुः ॥

तत्र सङ्ग्रहनिर्णयः- तत्र चन्द्रक्षयायां द्वितीयायाम् अमावास्यायां त्रिधा विभज्य दिवसं तृतीयभागे आद्यघटिकात्रये तत्र श्राद्धं कार्यम् । कात्यायनः-

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयेंशे नातिसन्ध्यासमीपतः ॥

छान्दोगपरिशिष्टे कात्यायनस्य विवरणात् उभयत्रापराह्णव्यापित्वे

---

५०. उपवासः उपोषणमात्रम् । व्रतशब्दस्तु नक्तादिष्वपि सामान्यपूजादिसहितः ।

५१. अमा सह वसतोस्यां चन्द्रार्काविति । अतएव गोभिलः- अथ यदहश्चन्द्रमा न दृष्यतेताममावास्यामिति । अमरसिंहोपि- अमावास्या त्वमावास्या दर्शः सूर्येन्दुसङ्गमः । अस्या द्वैविध्यमाह- सा दृष्टेन्दु सिनीवाली, नष्टेन्दुकला कुहुरिति। देवीपुराणे- अमा नाम रवेः रश्मि सूर्यलोके प्रतिष्ठिता ।
यस्मात् सोमो वसत्यस्याममावास्या ततः स्मृतः ॥
सा च प्रतिपद्युक्ता ग्राह्या युग्मवाक्यात् ।

विशेषमाह स्मृत्यन्तरे-

अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत् ।

तत्राल्पत्वमहत्त्वाभ्यां निर्णयः पितृकर्मणि ॥

महत्येव ग्राह्या इत्यभिप्रायः । स च शिवराघवसंवादे अल्पापराह्णे त्याज्या सा ग्राह्या स्यादधिका भवेदिति ।

तथा च-अमावास्या च या हि स्यादपराह्णद्वयेऽपि सा ।

क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृता ॥

प्रचेता- तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ।

साम्येऽपि च कुहूर्ज्ञेया वेदवेदान्तवेदिभिः ॥

तिथिवृद्धौ कुहूः स्मरेति वेदितव्यम्, ''चतुर्दशीमिश्रा सिनीवाली'' प्रतिपन्मिश्रा कुहूरिति । तथा च व्यासः-

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता ॥

कात्स्न्येनोभयत्रापराह्णव्याप्तावपि तिथिवृद्धित्वात् कुहूरेव ग्राह्या । साम्येऽपि च कुहूर्ज्ञेया इति विधानात् । यदा दिनद्वयेऽपि अपराह्णं न स्पृशति तदा साग्निनिरग्निभेदेन व्यवस्था द्रष्टव्या । तदाह जाबालिः-

अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये ।

आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ॥

आदिशब्दात् स्त्रीशूद्रयोरपि ग्रहणम् । माधवाचार्योऽपि-

[५२]साग्न्यनग्निव्यवस्था स्यान्न स्याच्चेदपराह्णयोः ।

पूर्वेद्युः साग्निकः कुर्यादुत्तरेद्युरनग्निकः ॥

अनन्तदर्शीयकालादर्शकाराभ्यामप्येवमुक्तम् ''एतत् कल्पतरुकारादिभिः नादृतम्'' साग्निनिरग्नयोरविशेषादिति तैरुक्तम् । तदुक्तं परिशिष्टे-

यदा चतुर्दशी यामं तुरीयमनुपूरयेत् ।

अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥

यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः ।

तत् क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि ॥

---

५२. अपराह्णद्वयास्पर्शे आब्दिकाद्विशेषमाह साग्न्यनग्नीति । सैवाधिकारिभेदेन व्यवस्था परार्द्धेन स्पष्टीकृता ॥ का.मा. पृ-१६ ।

यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दशपेक्षया ।
अमावास्या प्रतीयेत दत्तेवापि न निवसेत् ॥

अस्यार्थः- चतुर्दश्याः यामं चतुर्दशीयामं तुरीयं चतुर्थं पूरयेत् । प्रहरत्रयव्यापिनी चतुर्दशी भवतीत्यर्थः । परदिने पूर्वतिथ्यपेक्षया क्षीयमाणा भवति । तदा पूर्वदिने अमावास्यावेलायां श्राद्धम् । वर्द्धमानपक्षे पुनश्चन्द्रक्षयमनादृत्य केवलामावास्यामात्रे परदिने एव श्राद्धम् ।

तत्र कात्यायनः-

वर्द्धमानाप्यमावास्या पक्षयोरपरेऽहनि ।
यामान् त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥
प्रतिपद्यपि कुर्वीत श्राद्धं श्राद्धविदो विदुः ॥

आग्रहायणज्येष्ठयोस्तु विशेषः । आग्रहायणज्येष्ठ अमावास्ययोस्तु ज्योतिःशास्त्रानुसारेण चन्द्रगति वैलक्षण्यात् अष्टमेऽंशे चतुर्दशी क्षीणा भवति इत्यादिप्रकारस्यासम्भवादुत्तरदिन एव अमावास्याष्टमांशेऽपि श्राद्धं कर्त्तव्यमिति कल्पतरुकारः । तदन्त एव क्षयमेवेति कृत्स्नमिति कात्यायनस्मरणात् । अमावास्या पौर्णमास्योः श्राद्धं विहितमस्ति । तदाह पितामहः-

अमावास्याव्यतीपातपौर्णमास्याष्टकासु च ।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते हि सः ॥

व्यासोऽपि-

न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः ।
इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु सः ॥

उशनाः-

कुर्यादहरहश्राद्धं प्रमातृपितृको द्विजः ।
साग्निकोऽग्निको वाऽपि दर्शे दर्शे विशेषतः ॥

इत्यनित्यश्राद्धतुल्यतयाभिधानात् । मासि मासि दर्शे दर्शे इति । वीप्सा वचनात् दर्शश्राद्धं नित्यम्, काम्यश्च फलश्रवणादवगम्यते । स्मृत्यन्तरे-

दर्शे स्नात्वा पितृभ्यश्च दद्यात्कृष्णतिलोदकम् ।

अन्नञ्च विधिवद् दद्यात् सन्ततिस्तेन वर्द्धते ॥

इति श्रवणात् ब्राह्मणभोजनासम्भवे पिण्डमात्रदर्शनात् पिण्डमात्रं कर्त्तव्यम् । तदुक्तं स्मृत्यन्तरे-

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।

अग्नौ हूतेन देवस्था पितृस्था द्विजतर्पणैः ॥

नरकस्थाश्चेत् तृप्यन्ति पिण्डै विप्रास्त्रिभिर्भूवि ॥

इति पृथक् फलाभिधानात् पिण्डमात्रं फलं युक्तम् ।

पराधीनप्रवासी च श्राद्धे दद्यात्तिलोदकम् ॥

इति विद्याकरः ।

## अमावास्यायामुपवासादिर्विचार्यते

तदाह बृहस्पतिः-

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।

अमावास्या तृतीया च ता उपोष्याः परान्विताः ॥

यत्तु नारदीये पूर्वविद्धावचनं श्रूयते-

दर्शं च पौर्णमासश्च पितु सांवत्सरं दिनम् ।

पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥

एतत् सावित्रीव्रतविषयम् । श्राद्धविषयं द्रष्टव्यं ब्रह्मवैवर्त्ते-

[५३]भूतविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा ।

वर्जयित्वा मुनिश्रेष्ठं सावित्रीव्रतमुत्तमम् ॥

## अथ यागकालो निरूप्यते

तत्र बृहच्छातातपः-

पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।

यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥

अत्र प्रतिपदिति विशेषणं सूर्योदयस्योपरि मुहूर्त्तत्रयं यागकाल इत्युक्तं भवति। प्रतिपच्चतुर्थांशस्य यागे निषेधात् । तत्र कात्यायनः-

---

५३. इति वचनात् पूर्वविद्धा ग्राह्या । यदा चतुर्दशी अष्टादशनाड्यो भवन्ति सावित्रीव्रतमपि तत्र त्याज्यम् । यतो हि-

भूतोष्टादशनाडीभिर्दोषत्युत्तरां तिथिम् ॥ इति वचनात् ।

न यष्टव्यं चतुर्थांशे यागैः प्रतिपदः क्वचित् ।
रक्षांसि तद् विलुम्पन्ति श्रुतिरेषा सनातनी ॥

इति वचनात् प्रथमांशत्रये यागासम्भवे आलस्यादिना चतुर्थांशेऽयष्टव्यम्। यदा मध्याह्नादूर्ध्वसन्धौ तस्मिन्दिने अन्वधाय, परेद्युरिष्टौ क्रियमाणायामुक्त कालापत्तिः स्यादित्यत्राह- तस्याः प्रतिपदश्चतुर्थोऽंशे यागकालः । तदाह बृद्धशातातपः-

सन्धियद्यापराह्ने स्याद् यागं प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे तुरीयेऽपि न दुष्यति ॥

इति वचनाददोषः । पौर्णमास्यां विशेषमाह कात्यायनः-

सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक् चेदावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्तकालविधौ तिथिः ॥

## अथ विकृतेष्टिविचार्यते

यदा तु पूर्वाह्णे मध्याह्ने वा पर्वसन्धिस्तदा प्रातरेव प्राप्तयोः प्रकृतिविकृत्योः किमादौ कर्त्तव्यमित्यपेक्षयामापस्तम्ब आह-

प्रकृतेः पूर्वत्वावदपूर्वमन्ते स्यादिति ॥

अपूर्वा विकृतिः प्रकृतेः समाप्तौ स्यात् । पूर्वत्वात् प्रकृतेरेतदाह कात्यायनः-

[५४]आवर्त्तनात् प्राक् यदि पर्वसन्धिः
कृत्या तु तस्मिन् प्रकृतिं विकृत्याः ।
तत्रैव यागः परतोयदिस्यात्-
तस्मिन् विकृत्याः प्रकृतेः परेद्युः ॥

सर्वासां दृष्टीनां दर्शपौर्णमासौ प्रकृतिः । ऐन्द्राग्निमेकादशकपालं निर्वपेदित्यादिना काम्येषु यो यो विकृतयः ।

इति स्मृतिसारसंग्रहे तिथिनिर्णयप्रकरणम् ॥

## अथ अशोकाष्टमीनिर्णयः

अथेदानीं चैत्र शुक्लादिका मासा इत्यभिप्रायेण प्रथममशोकाष्टमी निरूप्यते । तत्र लिङ्गपुराणे-

---

५४. आवर्त्तनः सूर्यस्य पश्चिमदिग्गमनारम्भकाल इति ।

चैत्रे मासि सिताष्टम्यां ये पिबन्ति पुनर्वसौ ।
अशोककलिका चाष्टौ न ते शोकमपाप्नुयुः ॥

अत्र पुनः अष्टमीपुनर्वसुयोगस्तु उत्तमः । भेदे तु पूर्वपठितस्य मुख्यत्वात् पश्चाङ्गेषु तिथिः प्राथम्येन प्रधानत्वात् अष्टम्यामेवेति.शतानन्दः- तिथिद्वैधेष्टमी परविद्धाग्राह्येति प्रागुक्तम् । अशोककलिकां जलगण्डूषमध्ये स्थापयित्वाभिमन्त्रयेत्, मन्त्रो यथा-

त्वामशोक [५५]हराभिष्टं मधुमाससमुद्भवम् ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥

यदा पुनः पुनर्वसुयुक्ता अशोकाष्टमी बुधवारे स्यात्तदा विशेषमाह-

चैत्रे मासि सिते पक्षे वृषलग्ने पुनर्वसौ ।
स्रोतः तु विधिवत् स्नात्वा वाजपेयफलं लभेत् ॥
अशोकैरर्चयेदुग्रमशोककलिकाः पिबेत् ॥

उग्रं= महादेवम् ।

## अथ रामनवमी

अथ काले मनोरम्ये मधुमासि शुचिस्मिते ।
[५६]शुक्ले नवम्यां विमले नक्षत्रेऽदिति दैवते ॥
मध्याह्नसमये लग्ने सर्वग्रहसमन्विते ।
कौशल्या जनयामास पुत्रं लोकेश्वरं हरिम् ॥ इति पद्मपुराणे ।

---

५५. राभीष्ट- हरप्रिय इति । इमं मन्त्रं पौराणिकत्वात् स्त्रियः शूद्राश्च पठनीयः । स्त्रीभिरत्र नोहः कार्यः । प्रकृतावपूर्वत्वात् इति जैमिनीन्यायेन प्रकृतावूहाभावात् एतत्पानस्य भोजनरूपत्वात् अष्टधाविभज्य दिवसस्य पञ्चमभागः कर्मकालः । तिथिद्वैधे परविद्धैव ग्राह्या सामान्यशुक्लाष्टमी त्वात् । फलं त्वत्र मन्त्रलिङ्गात् शोकाभावः ।

५६.रामनवम्यां परविद्धामाचरिते व्रते यत्र पारणमेकादश्यामापतति तत्र एकादश्यां भोजनस्य निषिद्धत्वात् पूर्वविद्धायामुपवासो वैष्णवैरपि सुतरां विधेय एवेति सारः । वस्तुतस्तु 'परविद्धैव कर्त्तव्या मध्याह्नव्यापिनी सदा' इति प्रमाणवाक्ये परविद्धत्वस्य मध्याह्नव्यापित्विस्य च द्वयोरेव विधेयत्वेनोपदिष्टत्वात् दिनद्वये मध्याह्नयोगाभावे परेद्युरेव ॥ का.दी. पृ-५९ ।

## अथ कामदेवत्रयोदशी

तत्र शतानन्दसंग्रहे-

कामदेवस्त्रयोदस्यां पूजनीयो यथाविधि ।
रतिप्रीतिसमायुक्तो हृत्शोकमणिभूषितः ॥
ततः प्रातः समुत्थाय स्नात्वा कलशवारिणा ।
परं सौभाग्यमाप्नोति कामांश्चाप्नोति पुष्कलान् ॥

धवलसंग्रहे-

मधुशुक्लत्रयोदश्यां दमनं चन्दनात्मकम् ।
कृत्वा सम्पूज्य विधिवद् बीजयेत् व्यजनेन तु ॥
ततः सम्पूजितः कामः पुत्रपौत्रसमृद्धितः ॥

अत्र तिथिद्वैधे पूर्वविद्धा ग्राह्या, तथा च माधवीये-

अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥

## अथ दमनकचतुर्दशी निरूप्यते

तत्र कालादर्शे-

सर्वेषामपि देवानां चैत्र्यां दमनकार्चनम् ।
कृत्वा त्वब्दकृताचार्याः सम्पूर्णफलमश्नुते ॥

वायुपुराणे-

संवत्सरकृताचार्याः साफल्यायाखिलानपि ।
सुरानभ्यर्च्चयेदम्ब विशेषेण सदाशिवम् ॥

लिङ्गपुराणे-

मधुमासे तु सम्प्राप्ते शुक्लपक्षे चतुर्दशी ।
प्रोक्ता दमनका चेति सिद्धिदा च महोत्सवा ॥

चतुर्दशी पूर्वविद्धा ग्राह्या । यत्तु निगमे पठ्यते-

शुक्लपक्षेष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥

इदं दमनकचतुर्दशीव्यतिरिक्तविषयपरम् । तदुक्तं वायुपुराणे-

सदा चतुर्दशी पूज्या युक्ता पूर्णेन्दुना सह ।

अपूज्या पूर्णिमायुक्ता मधौ शुक्ला चतुर्दशी ॥
अकरणे दोषो नास्ति करणे तादृशं फलम् ।
अकृत्वा दमने शीर्णं ब्रह्महा पूजने भवेत् ॥
अकृते च तदा दोषो जायते निश्चितं मुने ।
दत्वा लक्ष्याश्वमेधस्य लभते फलमुत्तमम् ॥

## अथ अक्षयतृतीया

तत्र भविष्यपुराणे-

वैशाखे मासि राजेन्द्र तृतीया चन्दनस्य[५७] च ।
कलधौतं तथा धान्यं धृतं वाऽपि विशेषतः ॥
अस्यां दत्तं त्वक्षयं स्यात्तेनेयमक्षया स्मृता ॥

तृतीया चन्दस्येति वचनात् अत्र चन्दनदानं प्रशस्तम् । तदुक्तं कृत्यकौमुद्याम्-

दानात्तु चन्दनस्येव कञ्जजो नात्र संशयः ॥

कञ्जजो= ब्रह्मा ।

विष्णुधर्मोत्तरे-

अक्षया सा तिथिर्ज्ञेया कृत्तिकाभिर्युता यदि ।
भविष्यति महाभाग विशेषेण फलप्रदा ॥
वैशाखे मासि राजेन्द्र शुक्लपक्षे तु या तिथिः ।
अक्षया सा तिथिः प्रोक्ता कृत्तिकारोहिणीयुता ॥

ब्रह्मपुराणे-

यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम् ।
वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ॥

आग्नेयपुराणे-

छत्रोपानहदानादौ महाफलमुक्तं ग्रन्थविस्तरभयान्नोक्तम् ।

---

५७. 'तृतीया चन्दनस्येति' वचनात् न केवलं चन्दनदानमपि च देवप्रतिमानां चन्दनोत्सवोऽपि क्रियते । पुरुषोत्तमक्षेत्रे श्रीजगन्नाथदेवस्य विंशतिदिवसात्मिका अन्येषां चोत्कलदेशे एकविंशतिदिवसात्मिका चन्दनयात्रा क्रियते । का.दी. पृ- २३

विष्णुधर्मोत्तरे-

यवदाने महाफलमपि उक्तम् ।

ब्रह्मपुराणे-

तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्च्चयेत् ।
यवान् दत्वा द्विजातिभ्यः प्रयतः प्राशयेद् द्विजान् ॥
पूजयेत् शङ्करं गङ्गां कैलाशं च हिमालयात् ।
भगीरथञ्च नृपतिं सागराणां सुखावहम् ॥
स्नानं दानं तपः श्राद्धं जपहोमादिकं च यत् ।
श्रद्धया क्रियते यस्तु तदानन्ताय कल्प्यते ॥
सिन्धोस्तीरे विशेषेण सर्वमक्षयमुच्यते ॥

अत्र गृहिणां पुत्रिणां पिण्डरहितमेव श्राद्धं कर्त्तव्यम् ।

तथा च मार्कण्डेय-

युगादौ षडशीत्यां च गृहाच्छादन एव च ।
नित्यश्रद्धे तु संक्रान्त्यामपिण्डं श्राद्धमिष्यते ॥

अत्र यवपाकत्वेन श्राद्धं विहितम् । तस्मान्नित्यम् । विहिताकरणे विष्णुपद्धतौ दोषः पठ्यते । अमावास्या तिस्रोष्टका मघाप्रौष्ठपदादूर्ध्वं कृष्णत्रयोदशी ब्रीहियवपाकौ च ।

एतांस्तु श्राद्धकालान् वै नित्यान्नाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥

अत्र तिथिद्वैधे तृतीया परसंयुतैव ग्राह्येति प्रागुक्तम् । तद् व्यापिन्यां श्राद्धादिक्रिया कर्त्तव्या इत्यर्थः ।

## अथ सावित्रीव्रतं निरूप्यते

तत्र शतानन्दः-

ज्येष्ठकृष्णत्रयोदश्यां त्रिरात्रं व्रतमाचरेत् ।
सावित्रीं पूजयेददेवीम् उत्सङ्गस्य मृतप्रभुम् ॥
त्रिरात्रो पोषणं तत्र स्त्रीणां नान्यत्र शस्यते ।
कार्यं पत्युरनुज्ञाते वैधव्यं न भवेत् क्वचित् ॥

अत्र च तिथिद्वैधे सति सावित्रीव्रतं पूर्वदिने कर्त्तव्यम् । तथा च ब्रह्मवैवर्त्ते-

भूतविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा ।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥

यदा चतुर्दश्यष्टादशनाडीका भवति तदा सावित्रीव्रतमपि तत्र परित्याज्यम् ।

भूतोष्टादश नाडीभिर्दुष्यत्युत्तरा तिथिम् ॥

इति स्मृतेः । तथा च स्कन्दपुराणे-

भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत् ।
वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन ॥

माधवीये-

पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथिः ।
नाड्योऽष्टादश भूतस्य स्युश्चेत्तत्र परोऽहनि ॥

पूर्वविद्धाकरणे दोषमाह नारदः-

दर्शं च पौर्णमासं च पितुः संवत्सरं दिनम् ।
पूर्वविद्धामकुर्वाणो नरकं प्रतिपद्यते ॥

एतत्तु सावित्रीव्रतविषयम् । श्राद्धविषयश्चेति माधवीकारः ।

## अथ आरण्यकषष्ठी निरूप्यते

सत्यः-

ज्येष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञका ।
तां विन्ध्यवासिनीं देवीं पूजयेयुः वनेगताः ॥
कन्दमूलफलाहाराः लभन्ते सन्ततिं शुभाम् ॥

तिथिद्वैधे पूर्वविद्धाग्राह्या ।

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कार्याः तिथ्यन्ते पारणं भवेत् ॥

## अथ दशहरा-दशमी निरूप्यते

स्कन्दपुराणे-

ज्येष्ठशुक्लस्य दशमी संवत्सरमुखी स्मृता ।
तस्यां स्नानं प्रकुर्वीत दानञ्चैव विशेषतः ॥

यां काञ्चित् सरितं प्राप्य दद्यादर्घतिलोदकम् ।
मुच्यते दशभिः पापैः सुमहापातकोपमैः ॥

तिथिनक्षत्रयुगस्तु ब्रह्मपुराणे पठ्यते-

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दश पापानि तस्मात् दशहरा स्मृता ।

तथा तिथिनक्षत्रयोगस्तु भविष्यपुराणे पठ्यते-

ज्येष्ठशुक्लदशम्यां च भवेद् भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥

अत्र केवला दशमी पूज्या यदा तु हस्तसंयुक्ता तदा पुण्यतरा । यदा भौमवारहस्तर्क्षयुक्ता तदा पुण्यतमेति विवेकः । हरते दशपापानि गङ्गास्नाने विश्वामित्रेणोक्तानि । तद्यथा-

पारुष्यमनृतश्चैव पैशुन्यं वाऽपि सर्वशः ।
असम्बन्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
परद्रव्येष्वभिधानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम्
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
दशपापहरेत्यवं स्तूयते त्वं सुरासुरैः ।
हर तानि सदा गङ्गे पापानि हरतो मम ॥

दशहराधिकारे ब्रह्मपुराणे-

यस्तस्यां ह्यनीलं कृष्णं पश्येद् भद्रां सुसञ्जतः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥

अत्र तिथिद्वेधे परविद्धाग्राह्या । तथा-

कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता ॥

इति माधवीकारः ।

## अथ चम्पकद्वादशी निरूप्यते

तत्र भविष्यपुराणे-

ज्येष्ठे मासि सिते पक्षे द्वादश्यां चम्पकैः शुभे ।

शुद्धैरभ्यर्च्चर्य गोविन्दं नरः किमनुशोचित ॥

ज्योतिःशास्त्रे-

द्वादश्यां शुक्लपक्षस्य चम्पकैरर्चयेद्धरिम् ।
सर्व्वपापविनिर्मुक्तः स यात्यच्युतमन्दिरम् ॥

तत्र तिथिद्वैधे द्वादशी पूर्वविद्धा ग्राह्या । तथा च स्कन्दपुराणे-

द्वादशी च प्रकर्त्तव्या एकादश्या युता विभो ।
सदा कार्या च विद्वद्भिः विष्णुभक्तैश्च मानवः ॥

## अथ देवस्नानं निरूप्यते

तत्र ब्रह्मपुराणे-

शृणुध्वं मुनय स्नानं कृष्णस्य गदतो मम ।
रामस्य च सुभद्रायाः पुण्यं सर्वाघनाशनम् ॥
मासि ज्येष्ठे च सम्प्राप्ते नक्षत्रे चन्द्रदैवते ।
पौर्णमास्यां तदा स्नानं सर्वकालं हरेर्द्विजाः ॥
सर्वतीर्थमयः कूप तत्रास्ते निर्मलः शुचिः ।
तदा भोगवती तत्र प्रत्यक्षा भवति द्विजाः ॥
तस्माज्ज्येष्ठ्यां समुद्धृत्य हैमाढ्यैः कलसैर्जलम् ।
कृष्णरामाभिषेकार्थं सुभद्रायाश्च भो द्विजः ॥
कृत्या सुशोभनं मञ्चं पताकाभिरलङ्कृतम् ।
सुदृढं सुखसञ्चारं वस्त्रैः पुष्पैः सुशोभितम् ॥
विस्तीर्णं धूपितं धूपैः स्नानार्थं कृष्णरामयोः ।
सितवस्त्रैः परिच्छन्न मुक्ताहारवलम्बितम् ॥
तत्र नानाविधैः वाद्यैः कृष्णं नीलाम्बरं द्विजाः ।
स्नानमन्त्रैः सुभद्रां च जयमङ्गलनिस्वनैः ॥
ब्राह्मणैः क्षत्रियैः वैश्यैः शूद्रैरन्यैश्च जातिभिः ।
अनेकजन्मसाहस्रैः कृतं त्रिपुरुषैः द्विजाः ॥
गृहस्थाः स्नातकाश्चैव यतयो ब्रह्मचारिणः ।
स्नापयन्ति तदा कृष्णं मञ्चस्थं सहलायुधम् ॥
तथा समस्ततीर्थानि पूर्वोक्तानि द्विजोत्तमाः ।

सगन्धैः पुष्पमिश्रैश्च स्नापयन्ति पृथक् पृथक् ॥
नमस्ते देवदेवेश पुराणपुरुषोत्तम ।
सर्गस्थित्यन्तकृद् देव लोकनाथ जगत्पते ॥
त्रैलोक्यधारिणं देव ब्रह्मण्यं मोक्षकारणम् ।
तं नमस्यामहे भक्त्या सर्वकामफलप्रदम् ॥
तस्मिन् काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम् ।
बलभद्रं सुभद्राञ्च ते यान्ति पदमव्ययम् ॥
कपिला शतदानेन यत् फलं पुष्करे स्मृतम् ।
तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥

अपराण्यपि फलश्रुतिवाक्यानि सुविस्तरादिह न लिखितानि । तथा च पुरुषोत्तमाहात्म्ये-

जयस्व रामकृष्णेति सुभद्रेति ततः परम् ।
वदति मार्जने काले याति ब्रह्मपदं मम ॥

तथा- स्नातं पश्यति यः कृष्णं व्रजन्तं दक्षिणामुखम् ।
ब्रह्महत्यादिभिः पापैः मुच्यते नात्र संशयः ॥

फलश्रुतिवाक्यानां बहुत्वान्न लिखितानि । तथा च वायुपुराणे-

ततः पञ्चदशाहानि मम स्नानादनन्तरम् ।
सुरूपां वा विरूपां वा न पश्येत् प्रतिमां मम ॥

## अथ भूमिरजस्वला निरूप्यते

अथ प्रसङ्गात् भूमिरजस्वला लिख्यते । तत्र शतानन्दसंग्रहे-

मृगर्क्षेऽर्के निवसति तन्मध्येऽपि दिनत्रयम् ।
रजस्वला स्यात् पृथिवी कृषिकर्मविगर्हितम् ॥

## अथ कृष्णस्य गुण्डिचायात्रा

तत्र ब्रह्मपुराणे पठ्यते-

गुण्डिचामण्डपे यान्तं ये पश्यन्ति रथे स्थितम् ।
कृष्णं बलं सुभद्राञ्च ते यान्ति भवनं हरेः ॥
ये पश्यन्ति तदा कृष्णं सप्ताहं मण्डपस्थितम् ।
हरिं रामं सुभद्राञ्च विष्णुलोकं व्रजन्ति ते ॥

यात्रां कृत्वा गुण्डिचाख्यां विधिवत् सुसमाहितः ।
आषाढस्य सिते पक्षे द्वितीया पुष्ययोगतः ॥
दृष्ट्वा रामञ्च कृष्णञ्च सुभद्राञ्च द्विजोत्तमाः ।
दशपञ्चाश्वमेधानां फलं प्राप्नोति चाधिकम् ॥

अथ बाह्यादिदेवताशयनकालः राजमार्त्तण्डे-

वह्निस्कन्दपुरान्दरागणपतिः श्रीधर्मराट् भास्करो,
वायुः पर्वतपुत्रिका वसुमती तोयाधिपः केशवः ।
ब्रह्माशम्भूजलादयः प्रतिपदारम्भे तिथौ शेरते,
उत्तिष्ठन्त्यमुना क्रमेण वरदा स्वे स्वे दिने पूजिताः ॥

## अथ आषाढैकादशी

तत्र काश्यपपञ्चरात्रे श्रीकृष्णवाक्यम्-

मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने ।
अत्र यो वैष्णवो कश्चित् दीक्षितो भक्तितत्परः ॥
अनिमित्तं च दीक्षायां न चक्षुर्वाधिपीडितः ।
अन्नं वा यदि भुञ्जीत फलमूलयवापि वा ॥
अपराधमहं तस्य न क्षमामि तु काश्यप ।
क्षिपामि नरके घोरे दच्छल्यं जायते मम ॥

भविष्योत्तरे-

सुप्ते त्वयि जगन्नाथ जगत् सुप्तं भवेदिदम् ।
विबुधे त्वयि बुध्येत जगत्सर्वं चराचराम् ॥

## अथ देवशयनपार्श्वपरिवर्त्तनोत्थापनकालः

तत्र नारदीये-

मैत्राद्यपादे स्वपितीह विष्णुः वैष्णव्यमध्ये परिवर्त्तते च ।
पौष्यावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन ॥
अमावासितपक्षेषु मैत्रा श्रवणा रेवती ।
आदिमध्यावसानेषु शयनावर्त्तनाद्रवेः ॥
निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगास्तु द्वादस्यामेव कारयेत् ॥

अत्र द्वादशी रात्रिषु सन्ध्यादिवसेषु अनुराधाश्रवणरेवतीनामादि मध्यान्तपादेषु शयनोद्वर्त्तनोत्थापनानि अनुष्ठेयानि । यदा तु द्वादशी रात्र्यादिषु पादयोगो न लभ्यते तदा द्वादशी रात्र्यादिषु नक्षत्रयोगमात्र एव शयनादि कर्मविधेयम् । अथवा यदा तु द्वादश्यां नक्षत्रयोगोऽपि न लभ्यते तदा द्वादशी सन्ध्यायामेव शयनादिकम् । अतएव वराहपुराणे-

द्वादश्यां चैव सन्ध्यायां नक्षत्राणामसम्भवे ।
अमावासितपक्षेषु शयनोद्वर्त्तनादिकम् ॥
मैत्राद्यश्च दिवाभागो द्वादश्यां चेत् समाप्यते ।
मैत्रे निश्येव शयनं तत्र रात्रौ प्रधानतः ॥

ज्योतिःशास्त्रे-

विष्णुः दिवा न स्वपिति न रात्रौ च विबुध्यत ॥

इति एवमन्येषामपि स्वापतिथिवशेन शयनाद्यादरणीयम् । तदुक्तं शतानन्दसंग्रहे-

यस्य यस्य तु देवेस्य यन्नक्षत्रं तिथिश्च या ।
तस्य देवस्य तस्मिंस्तु शयनोद्वर्त्तनादिकम् ॥

भविष्योत्तरे-

मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम् ।
तुलाराशिगते तस्मिन् पुनरुत्थापयेद्ध्रुवम् ॥
अधिमासपतितेऽपि एष एव विधिः स्मृतः ॥

## अथ सङ्गमस्नानम्

तत्र शतानन्दसंग्रहे-

श्रावणे सङ्गमाः पुण्याः कुरुक्षेत्रसमाः स्मृताः ।
विशेषाद् बुधसंयुक्ताः तृतीयायां विशेषतः ॥

धवलसंग्रहे-

बुधश्रवणसंयुक्ता तृतीया यदि लिप्यते ।
तत्र दानोपवासादि अक्षयं परिकीर्त्तितम् ॥

## अथ नागपञ्चमी

तत्र भविष्यपुराणे-

श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वांरस्योभयतो लेख्या गोमयेन विषोल्वणा ॥
पञ्चम्यां स्नापयेत्तत्र नागान् क्षीरेण यो नरः ।
पूजयेद् विधिवद् वीर दधिदर्वाङ्कुरै कुशैः ॥
गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ।
ये रम्यान् पूजयन्तीह नागान् भक्तिपुरःसराः ॥
न तेषां सर्वतो वीर भयं भवति कुत्रचित् ।
एवं चतुर्षु मासेषु पञ्चम्यां यः प्रपूजयेत् ॥
आसप्तमान् कुलात्तस्य न भयं सर्पतो भवेत् ॥

नागपूजामन्त्रस्तु-

नमोऽस्तु सर्पेभ्य इति केचित् पठन्ति ।
नागौ तु कुलिकानन्तौ वासुकी शङ्खतक्षकौ ॥
अम्बुजकर्कटाविति महापद्मनमोऽस्तुते ॥

अत्र विनायकव्रतवत् पञ्चमी मध्याह्नव्यापिनी ग्राह्या । तत्र देवलः-

युगमध्यं दिने यत्र तत्रो पोष्य फणीश्वरान् ।
क्षीरेणाप्याय पञ्चम्यां पूजयेत् प्रयतो नरः ॥
विषाणि तस्य नश्यन्ति न च हिंसन्ति पन्नगाः ॥

## अथोपाकर्मकालः

अत्र वापराह्ले वा । तत्र ऋग्यजुरथर्वाणां पराह्णः । किन्त्वपराह्ण एव तत्र स्मृतिः- पूर्वाह्ले दैविकं कर्मेति ॥ तथा च-

पुर्वाह्ले वैदिकानामिति श्रुतेः ॥

तत्र एवं बृहत् प्रचेता-

भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव च ।
ब्राह्मणान् भोजयेत् तत्र पितृन्नुदिश्य देवताः ॥

अनन्तभट्टीये- दैवकर्म पूर्वाह्ण एव ॥

तथा च बह्वृचपरिशिष्टकारिकासु-

पर्वण्यौदयिकाः कुर्युः श्रावणं तैत्तिरीयकाः ।
बह्वृचा श्रावणे कुर्युः ग्रहसंक्रान्तिवर्जिते ॥

बह्वृचाः श्रावणे कुर्युरिति वचनात् यदा च उभयतः प्रातः सोदय त्रिमुहूर्त्तसद्भावेऽपि परदिने कर्त्तव्यम् ।

श्रवणं तूत्तरं ग्राह्यम् उपाकरणकर्मणि ॥

इति माधवीकारः । अत्र औदयिकपरः पूर्वाह्ण इत्यर्थः । तथा च बौधप्रकरणे निगमे पठ्यते-

श्रावण्याः प्रौष्टपद्या वा प्रतिपत् षण्मुहूर्त्तकैः ।
विद्धास्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत् ॥

कालादर्शे च-

उपाकर्मणि चोत्सर्गे पौर्णमास्यां परा तिथिः ।
षण्मुहूर्त्तकविद्धा स्यात् इति बेधो निरूपितः ॥

परातिथिः प्रतिषण्मुहूर्त्तकविद्धा अध्यायानामुपाकर्मणि उत्सर्गे समाप्तौ शस्तः स्यात् ।

अन्तभट्टीये- दैवकर्त्तव्यत्वात् पूर्वाह्णकर्त्तव्यतेति । उक्तश्च एतत् विश्वरूपाचार्येण स्वनिबन्धे भविष्योत्तरे-

सर्वत्र असाधारणनैव पर्वणौदयिके उपाकर्म श्रूयते ॥

भविष्योत्तरे-

सम्प्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ।
स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥
तत्र देवान् पितृंश्चैव तर्पयेत् परमाम्भसा ।
उपाकर्म दिने चोक्तमृषीणां चैव तर्पयेत् ॥
कुर्वीत ब्राह्मणैः सार्द्धं देवानुद्दिश्य शक्तितः ।
शूद्राणां मन्त्ररहितं स्नानं दानं प्रशस्यते ॥

यत्तु उपाकर्म पराह्णिकमिति पठन्ति तच्छान्दोगविषयमिति । श्रावणी-दुर्गनवमी इत्यादि पूर्वविद्धवचनस्य उत्तरविद्धदिने षण्मुहूर्त्ताभाव-विषयत्वम् । याज्ञवल्क्यः-

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रवणस्य तु ॥
पौषमासस्य रोहिण्यामष्टकायामथापि वा ।

जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद् बहिः ॥

अध्यायानां संख्याभिप्रायं बहुबचनम् । संस्कारकमुपाकर्माख्यं कर्म कर्त्तव्यमिति कल्पतरुकारः । हस्तेनेत्यस्य औषधिभावे पञ्चम्यामिति उभयतः सम्बन्धः । उषधिभावे ब्रीह्यादीनां सम्पत्तौ तथा च पारस्करः-

अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणे
श्रावण्यां पौर्णमास्यां पञ्चमी हस्तेन वेति ॥

अतः कालद्वयोस्योपाकर्मकर्मणो विकल्प इति कर्कभाष्यकारः[५८] । अभावेऽत्र यदा श्रावण्यां श्रवणयोगो न भवति तदा हस्तेन श्रवणपञ्चम्यामिति वदन्ति । तदुक्तं स्मृत्यन्तरे-

[५९]उपाकर्म च कर्त्तव्यं कर्कटस्थे दिवाकरे ।
हस्तेन शुक्लपञ्चम्यां श्रावण्यां श्रवणा न चेत् ॥

राजमार्त्तण्डे-

श्रावण्यां श्रवणा यत्र तत्रोपाकर्म कारयेत् ।
योगो नास्ति यदा काले हस्ते नैव तु पञ्चमी ॥

यदा तु श्रावण्यां न श्रवणा शुक्लपञ्चम्यामपि न हस्ता तदा केवलायामपि श्रावण्यां कार्यम् । स्मृत्यन्तरे-

"श्रावण्यामेव मुख्यत्वात् ।"

तथा च पूर्वस्वामिना श्रावण्यामध्यायानामुपाकर्म कुर्यात् । तथा श्रावण्यां श्रवणेन वेति । सहार्थे तृतीयाविभक्तेः गुणभूतत्वात् श्रवणायोगे च श्रावणपौर्णमास्यामिति मुख्यकल्प इति शतानन्दः । संहिताकार-प्रभृतयश्च । ग्रहणसंक्रान्ति वर्जितमिति ग्रहणे संक्रान्तौ संक्रमणे तदुपाकर्म कुर्युः । यदि जननमरणाशौचाभ्यामप्यसम्भवे तदा प्रौष्ठपद्यां भाद्रपदपौर्णमास्यां श्रावणे च व्यवस्थया कुर्युः । प्रौष्ठपद्यां तैत्तिरीयकाः कुर्युः बह्वृचाः श्रवणर्क्षयुक्ततिथिव्यतिरिक्तव्यवस्थात्वेन सूचितम् । तथा

---

५८. अतः कालद्वयस्योपकरणकर्मणो विकल्पोऽयमिति मुद्रित कर्कभाष्ये पाठः । पा.गृ.सू. पृ- २७२ ।

५९. उपाक्रियते प्रारभ्यते वेदस्याध्ययनं येन कर्मणा तदुपाकरणं नाम कर्मविशेषो वेदाध्ययनार्थं कर्त्तव्यमिति ॥ गो.गृ.सू.टी. ३/३ पृ- ४७ ।

च मनुः-

श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ॥

[६०]उत्सर्गस्तु पौर्णमासस्य रोहिण्यामष्टकायां वा कार्यः । अत ऊर्ध्वं शुक्लेऽप्याधीयात् । कामं तु वेदाङ्गानि । यस्त्वनध्ययनभयादस्मिन्-कालेनोत्सृजति स कालातिक्रमपर्वण्युपाकर्मविधानात् । अत तैत्तिरीयका इति वचनं तत्र तैत्तिरीयका एव पर्वणीति न नियन्तुं शक्यते। अन्येषामपि चरणानां पर्वण्युपाकर्म विधानात् । अत्र तैत्तिरीयका पदमुपलक्षणमित्यनन्तभट्टीकारः । शाखान्तराधिकरणन्यायेन सर्वाः शाखाः उपहृत्येति । छन्दोगानान्तु प्रौष्ठपदे मासि पुष्येणोत्सर्गो हस्तेनोपाकर्मेत्याह गोभिलः-

अथ प्रौष्ठपदीं हस्तेनोपाकरणं पुष्येणोत्सर्गः ।
हस्तेन हस्तनक्षत्रयुक्ततिथौ कर्त्तव्यम् ॥

तदाह गोभिलः-

पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ।
बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः ॥

एषान्तु कलावृद्धावपि सिंहार्के एव उपाकरणम् । तथा च गार्ग्यः-

सिंहे रवौ च पुष्यर्क्षे पूर्वाह्णे विधिवद् बहिः ।
छन्दोगाः मिलिताः कुर्युः उत्सर्गं स्व स्व छन्दसाम् ॥
शुक्लपक्षेन हस्तेन तूपाकर्म पराह्णिकम् ॥

गोभिलोऽपि-

अध्यायानामुपाकर्म कुर्यात् काले पराह्णिके ।

---

६०. उत्सर्ग इति- पौषस्य रोहिण्यां मध्यमायां वाष्टकायामध्यानुत्सृजेरन ॥ पा.गृ.सू. (२/१२/१), पौषमासे रोहिणीषु मध्यमाष्टकापि पौष एव तत्राध्यायोत्सर्गः । उदकान्तं गत्वा उदकान्ते गमनेन च स्नानमुपलक्ष्यते । ततोऽद्भिर्देवांस्तर्पयेयुराचार्य-सहिताः शिष्याः देवास्तृप्यन्तु चन्दांसि तृप्यन्त्वित्येवमादि ॥ इति कर्क- पा.गृ.सू. पृ-२८४ । एवं आचार्यास्तान् सन्तर्प्यापसव्यं प्राचीनावीतिना आचार्यसहिता दक्षिणामुखाः स्वांश्च पित्रादीनविद्यमानेव तर्पयेयुः । इति जयरामः। पा.गृ.सू. पृ- २८४ ।

पूर्वाह्णिके विसर्गः स्यादिति वेदविदोविदुः ॥

एतत्तु मलमासेऽपि कर्त्तव्यम् । सिंहे रवाविति वचनात् । तदुक्तं शतानन्देन-

उपाकर्म तथोत्सर्गः प्रसवाहोष्टकादयः ।
मलिम्लुचेऽपि कर्त्तव्याः शेषमन्यद् विवर्जयेत् ॥

छान्दोग्यव्यतिरिक्तानां शुद्धमास एव । तदाह प्रजापतिः-

उपाकर्म च हव्यञ्च काव्यं गर्भोत्सवं तथा ।
उत्तरे नियतं कुर्यात् पूर्वे च निष्फलं भवेत् ॥

माधवादि मासत्रयेष्वधिमासगते विशेषमाह । तथा हि-

माधवादित्रिके मासि अधिमासो यदा भवेत् ।
कर्कटेऽर्के हरेः स्वापः पौर्णमास्यामुपाकृतिः ॥
श्रावणादित्रिके मासि अधिमासो यदा भवेत् ।
सिंहेऽर्के च हरेः स्वापः श्रावण्यां स्यादुपाकृतिः ॥

इति विद्याकरः । तथा च स्मृतिमहार्णवे-

संक्रान्तिग्रहणं वाऽपि पौर्णमास्यां यदा भवेत् ।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ॥

यत्तु अनन्तभट्टीकारेण लिखितम्-

श्रवणेन तु यत् कर्म ह्युत्तराषाढ युक् कृतम् ।
संवत्सरकृतोऽध्यायस्तत् क्षणादेव नश्यन्ति ॥
धनिष्ठासंयुतं कुर्यात् श्रावणं कर्म यद् भवेत् ।
तत्कर्मसकलं ज्ञेयमुपाकरणसंज्ञितम् ॥

प्रमाणं चेत्तदा बह्वृचविषयमेव । 'बह्वृचाः श्रवणे कुर्युः' इति वचनत् ।

## अथ बलदेवस्य पूजा

तथा च स्मृतिः-

अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
सुखरात्रेरुषः काले प्रदीपो ज्वलितालये ॥
गावो महिष्यश्छागाद्याः पूज्याः शोभ्यास्तथा दिने ।
पूजनं केचिदिच्छन्ति श्रावण्यां तु गवादीनाम् ॥

पक्षद्वयस्य देशाद्यपेक्षया विकल्पः । अतएव बलिदानाभिधेया कार्त्तिकशुक्लप्रतिपदिति माधवीकारः । तथा च कृत्यकौमुद्याम्-

श्रावणी पूर्णमी यत्र मध्याह्नव्यापिनी यदि ।
उत्थाने बलदेवस्य नन्दविद्धान्तु वर्जयेत् ॥
सर्वा दर्पा तथा हिंस्रा नन्दा या पौर्णमी युता ।
उत्थापनं शूलपाणेः कारयेत् पूर्ववासरे ॥
याम द्वयं चतुर्दश्यां पूर्णिमायां द्वयात्मकम् ।
पूर्वेऽहनि बलेः पूजा पशुवन्दापनां तथा ॥
नन्दा युक्तपौर्णमास्यां कृते उत्थापिते बलेः ।
तत्र रोगी भवेद् विप्रो गावो नश्यन्त्यनेकधा ॥
पौर्णमास्यां सनन्दायां यत्र चोत्थाप्यते बलः ।
गवां तत्र भवेद्रोगो दुर्भिक्षं च तदा भवेत् ॥

पद्मपुराणे-

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥

तिथिद्वैधे पूर्वदिने पूजानुष्ठानमित्यर्थः । श्रावणेऽधिमासपाते मलिम्लुचे हरिशयनं कर्त्तव्यमाह तथा च कृत्यकौमुदीये-

कर्कटे च हरेः सुप्ते सिंहे गोपतिरुत्थिते ।
तत्रैव श्रावणी कर्म शक्रध्वजमतः परम् ॥

गोपतिः- बलभद्रः । अतः बचनात् उपाकर्मदिने बलभद्रोपत्थापनं कर्त्तव्यमिति अवगम्यते । तथा च धबलसंग्रहे-

विष्णोस्तु शयनादूर्ध्वं मासेनान्तरितं द्विजाः ।
उपाकर्म समाकुर्युः शयनानन्तरादिति ॥

## अथ रक्षापञ्चमी

रात्रौ रक्षाविधानं कर्त्तव्यम् । तत्तु भविष्ये-

यः श्रावणे स्रवति जले सुरेन्द्रे
रक्षाविधानमिदमाचरते मनुष्यः ।

आस्ते सुखेन परमेण स वर्षमेकं
पुत्रप्रियादि सहितः ससुहृज्जनश्च ॥

रक्षाकरणमन्त्रो यथा-

घण्टाकर्ण महावीर सर्वव्याधिनिवारक ।
सर्वोपद्रवसंहार विद्रावण हरप्रिय ॥
येन वद्धो बलिराजा दानवेन्द्रो महासुरः ।
तेन त्वामपि बध्नामि रक्षमाचर मा चल ॥
नमस्ते द्वारिके देवि नमस्ते नन्दिकेश्वरि ।
पञ्चम्यां निशिरात्रौ मे रक्ष देवि पुरःस्वयम् ॥
कण्ठे यस्य महानीलं भूषणं यस्य पन्नगाः ।
तेजांसि तस्य देवस्य रक्षन्तु मम मन्दिरम् ॥
[६१]यत्र त्वं तिष्ठसे देवि लिखिताक्षरपंक्तिषु ।
न भयं तत्र कुर्वीत पापरोगादिकिञ्चन ॥

यदि उभयदिने रात्रौ पञ्चमी स्पृशति तदा पूर्वदिने कर्त्तव्यमेव ।

## अथ कृष्णस्य जन्माष्टमी

तत्र ब्रह्मपुराणे- तथा भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगेऽष्टाविंशतितमे जातः कृष्णोऽसौ देवकीसुतः ।

तत्र जन्माष्टमीव्रतं नित्यम् । अकरणे प्रत्यवायश्रवणात्, वीप्साश्रवणाच्च नित्यम् । भविष्योत्तरे-

श्रावणे बहुले पक्षे कृष्णजन्माष्टमी व्रतम् ।
न करोति नरो यस्तु भवति क्रूरराक्षसः ॥
कृष्णजन्माष्टमीं त्यक्त्वा योन्यव्रतमुपासते ।
नाप्नोति सुकृतं किञ्चित् [६२]इष्टापूर्त्तिमथापि वा ॥

तथा च भोजनदोषः श्रूयते माधवीये-

गृध्रं मांसं खगं काकं श्येनञ्च मुनिसत्तम ।
मांसं वा द्विपदां भुंक्ते कृष्णजन्माष्टमी दिने ॥

---

६१. युग्मवचनानुसारं युगभूतानामिति युग्मप्रशस्ते ।
६२. योगक्षेमावेष्टापूर्त्तिपदेनोच्येते ।

जयन्तीफलश्रवणात् काम्यम् । [६८]रोहिणी योगस्य जयन्ती नामत्वम् । विष्णुधर्मोत्तरे-

रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम ।
जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः ।
यद्बाल्ये यच्च कौमारे यौवने वार्द्धक्येऽपि वा ।
बहुजन्मकृतं पापं हन्ति सीपीषिता तिथिः ॥

फलश्रुतिवाक्यानि बहुत्वाद् इह न लिखितानि । जयन्त्यां भोजने दोषः श्रूयते ।

शूद्रान्नेनं तु यत् पापं शंवहस्तस्य भोजने ।
तत्पापं लभते कुन्ति जयन्ती विमुखो नरः ॥

अकरणे प्रत्यवायश्च तदाह-

ब्रह्मघ्नश्च सुरापश्च गोबधे स्त्रीबधेऽपि वा ।
न लोको यदुशार्दूल जयन्ती विमुखस्य च ॥

ईदृशानि वाक्यानि सुविस्तरादिह न लिखितानि । विष्णुधर्मोत्तर भविष्यपुराणयोः-

रोहिण्यामर्द्धरात्रे तु यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेः हन्ति पापं त्रिजन्मजम् ॥
प्राजापत्यर्क्षसंयुक्ता कृष्णानभसि चाष्टमी ।
मुहूर्त्तमपि लभ्येत सीपीष्यासि महाफला ॥
अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा ।
रोहिणी सहिता कृष्णा मासि भाद्रपदेऽष्टमी ॥
अर्द्धरात्रादधश्चोर्ध्वं कलयापि यदा भवेत् ।
महापुण्यतमः कालो जयन्त्याख्य प्रकीर्त्तितः ॥
तत्र जाती जगन्नाथः कौस्तुभी हरिरीश्वरः ।
कार्या विद्धापि सप्तम्या रोहिणी सहिताष्टमी ॥

---

६८. अष्टमी कृष्णपक्षस्य रोहिणी ऋणसंयुता ।
भवेत् प्रौष्ठपदे मासि जयन्ती नाम सा स्मृता ॥
- इति का.मा. धृतविष्णुरहस्येति, का.मा. पृ- १६४ ।

तत्रोपवासं कुर्वीत तिथि भान्ते च पारणम् ॥

शतानन्दः-

कर्कटे सिंहे रवौ योगोऽयमिति ।

भृगुः-

जन्माष्टमी जयन्ती च शिवरात्रिस्तथैव च ।
पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम् ॥

यत्र जन्माष्टमी रोहिणीति पाठस्तत्रापि रोहिणीशब्देन तद्युक्तातिथिः विवक्षिता न तु केवला रोहिणी । देवलः-

उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत्[६४] ।

न तु तिथेः नक्षत्रस्य वा व्रतशेषकाले पारणं ब्रह्मवैवर्त्ते प्रतिपाद्यते-

अष्टम्यामथरोहिण्यां न कुर्यात् पारणं क्वचित् ।
हन्यात् पुराकृतं कर्म उपवासार्जितं फलम् ॥
तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् ।
तस्मात् प्रयत्नतः कुर्यात् तिथिभान्ते च पारणम् ॥

अतएवमादिकारेण लिखितम्-

तिथिक्षये द्वयोरन्तं उत्तमं पारणं भवेत् ।
एकस्यान्ते मध्यमं स्यात् उत्सवान्तेऽधमं स्मृतम् ॥

नारदीये-

तिथिनक्षत्रसंयोगे उपवासी यदा भवेत् ।
पारणं न तु कर्त्तव्यं यावन्नैकस्य संक्षयः ॥
संयोगिके व्रते प्रान्ते यद्येकोऽपि वियुज्यते ।
तत्रैव पारणं कुर्यात् एवं वेदविदो विदुः ॥

ननु अशक्तस्य तु तिथिनक्षत्रयोरनुवर्त्तमानयोरपि प्रातर्देवं संपूज्य क्रियमाणं पारणं न दुष्यति । तथा स्मृतिसमुच्चये-

तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणम् ॥

---

६४. पारणान्तं व्रतं ज्ञेयं व्रतान्ते तद्धि भोजनम् ।
असमाप्ते व्रते पूर्वे नैवकुर्यात् व्रतान्तरम् ॥ इति ।
-आदित्यपुराणमिति माधवोद्धृतः पाठः पृ-१८३ ।

अथ जयन्ती भेदे उपवासदिने यदि सोमवारो बुधवारो वा भवति तदा फलाधिक्यं भवति । ननु को भेदस्तदाह-

यदा उदये कियन्ती स्यादष्टमी सा च रोहिणीयुक्ता उपरि सकला नवमी बुधवासरे सोमवासरे वा भवति तदा सैवाष्टम्युपोष्या । तथोक्तं स्कन्दपुराणे-

उदये चाष्टमी किञ्चित् नवमी सकला यदि ।
भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्ष संयुता ॥
अपि वर्षशतेनापि लभ्यते वा न वा विभो ॥

विष्णुधर्मोत्तरेऽपि-

अष्टमी बुधवारेण रोहिणी सहिता यदि ।
भवेत्तु मुनिशार्दूलं किं कृतैः व्रतकोटिभिः ॥

## अथ सप्तपुरीकामावास्या

तत्र कल्पतरुः-

अमावास्या च पित्र्येण नक्षत्रेण च संयुता ।
सप्तप्रकाराः पितरो जाताः कमलसम्भवात् ॥
तेभ्यः पूजा च कर्त्तव्या तत्र सर्वात्मनाबुधैः ।
पिण्डोदेयस्तथाष्टाङ्गः श्राद्धं कार्यं च सर्वदा ॥

शतानन्दसंग्रहे-

दर्शे सुवर्णकटकैः प्रतिमाराधयन्ति याः ।
ताः सर्वाः सुभगाः नार्यः पुत्रवत्यो वराङ्गनाः ।
न वैधव्यं भवेत्तासां पुनर्जन्मसु सप्तसु ॥

तिथिद्वैधे परदिने कर्त्तव्यम् ।

अमावास्या तृतीया च ता उपीष्याः परान्विताः ।

इति विष्णुधर्मोत्तरवचनात् । उपवासशब्दो व्रतपरः ।

## अथ गौरीव्रतम्

तत्र शतानन्दसंग्रहे-

गुडापूपं च दातव्यं मासि भाद्रपदे सिते ।
तृतीयायां सर्वदानं वासुदेवस्य प्रीतये ॥

उमाशिवं गणेशञ्च विधिवद् पूजयन्ति याः ।
गौरीव्रतप्रसादेन परं सौभाग्यमाप्नुयुः ॥

तिथिद्वैधे परदिने व्रतं कर्त्तव्यम् ।
मुहूर्त्तमात्रसत्त्वेऽपि दिने गौरीव्रतं चरेत् ॥

इति माधवीकारः ।

## अथ शिवचतुर्थी

तत्र शतानन्दसंग्रहे-

मासि भाद्रपदे शुक्ला चतुर्थी शिवपूजिता ।
तस्यां स्नानं तथा दानमुपवासो जपस्तथा ॥
तावत् सहस्रगुणितं प्रसादाधत्तिनो नृपः ॥

अस्य पूजा अपराह्णे कर्त्तव्या । कृतः रौद्रत्वात् । तिथि द्वैधे पूर्वदिने कर्त्तव्यम् ।

## अथ [६५]हरितालिकाचतुर्थी

तत्र ब्रह्मपुराणे-

शुक्लपक्षे चतुर्थ्यां तु सिंहे चन्द्रस्य दर्शने ।
मिथ्याभिलाषनं कुर्यात्तस्मात् पश्येन्न तं सदा ॥

कदाचिद्दर्शने शान्तिमाह ब्रह्मपुराणे-

सिंहप्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमार कुमारोदिस्तव ह्येषः स्यमन्तकः ॥

चन्द्रं वीक्ष्य सिंहप्रसेनमिति वाक्यं प्रयत्नात् पठेदित्यर्थः । न तु सिंहे चन्द्रस्य इति वचनात् मालिम्लुचेऽपि चन्द्रदर्शने निषेधः । तथा च स्मृत्यन्तरे-

सीमन्तं प्रेतकृत्यञ्च नवशय्या नवः शशी ।
मलमासेऽपि कर्त्तव्यं निमित्तं विहितं च यत् ॥

नवराशि- चन्द्रवन्दापना इत्यर्थः ।

---

६५. हरितालिकेति- 'भद्रस्य कज्जली कृष्णा शुक्ला च हरितालिका ॥' (नि.सि.पृ-१०१) । भाद्रमासस्य शुक्लपक्षस्य या चतुर्थी सा हरितालिकेत्याभिधीयते पुराणे- 'आलिभिर्हरिता यस्मात्तस्मात्सा हरितालिका ॥' (नि.सि. पृ-१०१) ।

## अथ गणेशचतुर्थी

तत्र भविष्यपुराणे-

विनायकं समच्चर्य चतुर्थ्यां यदुनन्दन ।
सर्वविघ्नविनिर्मुक्तः कार्यसिद्धिमवाप्नुयात्• ।।

लिङ्गपुराणे-

चतुर्थ्यान्तु गणेशश्च गौर्याश्चैव विधानतः ।
पूजां कृत्वा लभेत् सिद्धिं सौभाग्यं च नरः क्रमात् ।।

देवीपुराणे-

गणेशं कारयेत् पूजां लड्डुकादिभिः भावनात् ।
चतुर्थ्यां विघ्ननाशाय सर्वकाम प्रसिद्धये ।।

कालादर्शे विशेषमाह-

शुक्लचतुर्थी कन्यार्के भौमवारेण संयुता ।
महती तत्र विघ्नेशमच्चित्येष्टं लभेन्नरः ।।
महाचतुर्थी सा ज्ञेया तत्र विघ्नेशमर्च्चयेत् ।
व्रतादिनियमैरिष्टं लभते नात्र संशयः ।।

तत्र कर्मकालो विनायकव्रतस्य मध्याह्नः[६६]-

प्रातः शुक्लतिलैस्नात्वा मध्याह्ने देवमर्च्चयेत् ।।

तिलान् शिरसि निक्षिप्येति कालादर्शकारः । तिथिद्वैधे पूर्वदिने व्रतं कर्त्तव्यम् ।

## अथ ऋषिपञ्चमी

स्मृतिसमुच्चये-

भाद्रे सितेऽपराह्ने तु पञ्चमी यत्र तिष्ठति ।
विश्वामित्र ऋषिस्त्रिभिः पूज्यः सन्तानवृद्धये ।।

अत्र तिथिद्वैधे पञ्चमी पूर्वविद्धा ग्राह्येति प्रागुक्तम् ।

शातानन्दश्च-

---

७१. चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते । मध्याह्नव्यापिनी चेत्स्यात् परतश्चेत्परेहनि। इति । का.मा. पृ-१४६ ।

षष्ठी युता पञ्चमी या महर्षेस्तस्य पूजनम् ।
पतिपुत्रहता नारी सा नारी नरकं व्रजेत् ॥

## अथ अगस्त्यर्घ्यम्

तत्र विष्णुरहस्ये-

पुरायुगं सहस्रं वै विष्णु वारुणिनाम्बुना ।
आराधितः प्रसादार्थं तस्मै प्रादाद्वरं हरिः ॥
दक्षिणाशां मुखं कृत्वा गच्छ तिष्ठ स्ववारुणे ।
हितार्थं सर्वलोकानां मद्वियोगधृतवती ॥
ये त्वां तत्रोदितं भक्त्या नार्चयिष्यन्ति मानवाः ।
तेषां सावत्सरं पुण्यं मत्प्रासादात् भवेत्तव ॥
ये त्वां महाविधानेन पूजयिष्यन्ति वारुणे ।
श्वेतदीपं गमिष्यन्ति ते नराः मत्प्रसादतः ॥
वेदवेदाङ्गविद्वांसो धनधान्यप्रजान्विताः ।
वारुणं ते भविष्यन्ति लोकेऽस्मिन्नर्घ्यदास्तव ॥
अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः ।
अर्घ्यं दद्युरगस्त्याय ये वसन्ति महोदये ॥

भाष्करे कन्यामप्राप्ते- सिंहमासे । सत्रिभागैरिति सिंहादित्यस्य तृतीयभागैः सहितैः त्रिभिदिनैश्च त्रयोदशदिनैरित्यर्थः । परन्तु महोदधिस्नानमिति ।

## अथ दूर्वाष्टमी

तत्र भविष्यपुराणे-

ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ।
महेशं पूजयेत् यस्तु दूर्वया सहितो मुने ॥

तस्मिन् व्रतविशेषेण शुक्लपक्ष वर्त्तित्वेन उत्तरविद्धायामप्राप्तायामपवाद-माह पद्मपुराणे-

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलोर्दिनम् ॥

## अनन्तचतुर्दशी

तत्र भविष्ये- अराधिते महेन्द्रे तु ध्वजाकारेषु यष्टिषु ततः शुक्लचतुर्दश्या-मनन्तं पूजयेद्धरिम् । तत्र तिथिद्वैधे परविद्धा ग्राह्या । तत्र व्यासः-

शुक्ला चतुर्दशी परविद्धा ग्राह्या सदा व्रते •।

स्मृत्यन्तरे-

अनन्तराघवे ग्राह्या परविद्धा चतुर्दशी ।

भविष्यपुराणे-

सदा कार्या त्रयोदश्या न तु युक्ता चतुर्दशी ।
पौर्णमासीयुता सा स्यात् चतुर्दश्या च पुर्णिमा ॥

नारदीये-तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥

तत्र पूर्वविद्धा परविद्धा वा मध्याह्नव्यापिनी ग्राह्या इति केचित् आहः । अत्र मध्याह्ने भोज्यवेलायामिति वचनेन मध्याह्नः कर्मकाल इति केचित् वदन्ति, नैतत्सारम् । दैवे ह्योदयकी ग्राह्या इति वचनेन चतुर्थीतरवर्ति मुहूर्त्तमिति मुख्यः। एवं विद्याकरपद्धतौ-

त्रिमुहूर्त्त भवेत् युक्ता उदयात् परतो यदि ।
तत्रानन्तव्रतं कुर्यात् पुत्रपौत्रधनान्वितः ॥
अनन्ताराधने ग्राह्या परविद्धा चतुर्दशी ।
त्रिमुहूर्त्ताधिका नोचेत् प्राक् पृथक् पूर्वसंयुता ॥
यदानन्त चतुर्दश्यां स्यादवस्पृक् त्रयोदशी ।
मुहूर्त्त त्रितयेनापि परत्रिघटिकाधिका ।
आवर्त्तेन यदा वै स्यादनन्तस्य चतुर्दशी ।
पूजा तत्रैव कर्त्तव्या देवदेवस्य चक्रिणः ॥
द्वयोरावर्त्तनाभावे ग्राह्या मध्यदिने तिथिः ।
द्वयोरावर्त्तना ग्राह्या परविद्धा चतुर्दशी ॥

यत्तु द्विमुहूर्त्तेत्यनुकल्पः । उदये त्रिमुहूर्त्तापि ग्राह्या तन्नव्रतितिथिः इति माधवीकारः । तदस्वर्ग्यं लोकविद्विष्टं धर्ममप्या चरेन्न तु ॥ इति निषेधान्नानुष्ठेयम् । व्रतविद्भिरिति कृत्यकौमुद्यां द्रष्टव्यम् ।

## अथ शक्रोत्थापनम्

तत्र ब्रह्माण्डे पुराणे-

द्वादश्यान्तु सिते पक्षे मासि भाद्रपदे तथा ।
शक्रमुत्थापयेद्राजा विश्वश्रवण वासवे ॥

विश्वः सकलः यः श्रवणवासरस्तत्र । अत्र विश्व इति विशेषणात् श्रवणाद्वादशी योगप्राप्तौ तिथ्यन्तेरपि श्रवणाद्यपाद एव । शक्रमुत्थापयेदित्यवगम्यते । तथा-

भाद्रे मासि सिते पक्षे श्रावणी द्वादशी यदा,
शक्रमुत्थापयेत्तत्र श्रवणे तद् वियोगतः ।
श्रावण्या भरणीं यावत् पूजां कृत्वा विधानतः
रात्रौ विसर्जयेद्देव मन्त्रेणानेन पाण्डव ॥

पूजामन्त्रस्तु भयिष्योत्तरे द्रष्टव्यः । तथा-

एवं यः कुरुते यात्रां शक्रकेतोर्युधिष्ठिर ।
पर्जन्य कामवर्षी स्यात्तस्मिन् देशे न संशयः ॥

## अथ इन्द्रपूर्णिमा

तत्र शतानन्दसंग्रहे-

पञ्चदश्यां महेन्द्रञ्च पूजयेत् किल कौतुके ।
गीतवादित्रमाङ्गल्यैः भूतये भूपतिर्निशि ॥

## अथ महाष्टमी

तत्र भागवते-

सर्वदेवोत्थिता तिष्ठेद् दुर्गा लोकहिताय वै ।
स्वपेद् भाद्रसिताष्टम्यां त्रि पञ्च दिवसात् परम् ॥
उत्तिष्ठत्यर्च्चिता देवी षोडशेऽहनि रात्रितः ।
दिवा स्वापे भवेद्रोगो निश्युत्थाने जनक्षयः ॥
दशम्यामश्वयुक् शुक्ले देवीं संप्रेक्षयेन्नृप ।
दिनक्षयो यदि भवेत्स्वपेघस्रां चतुर्दश ।
न वर्द्धयेत् स्वापदिनं तिथिवृद्धौ कदाचन ॥

मूलेन प्रति बोधयेत् भगवतीं चण्डीं प्रचण्डाकृतिम् ।
चाष्टम्यामुपवासं संयतधिया कृत्वा नवम्यां बलिम् ॥
नाना पाशव मांसमज्जरुधिरैः भक्त्या समाराधये ।
नक्षत्रे श्रवणे तिथिं च दशमीं सम्प्राप्य संप्रेषयेत् ॥
निशायामष्टमी प्रोक्ता दुर्गोत्सवं च कारयेत् ।
अन्यत्र चोपवासादौ न च विद्धाष्टमी भवेत् ॥
अष्टम्यां यत्र नवमी तत्र पूजां विवर्जयेत् ।
अष्टमी चेदनुप्राप्य अस्तं याति दिवाकरः ॥
तत्र दुर्गोत्सवं कुर्यान्नकुर्यादपरेऽहनि ।
वृथा पशुघ्नतां याति नवमी वासरार्च्चिते ॥
अष्टमी निशिसम्पूज्या पूजां गृह्णाति पार्वती ।

एतेन महानिशायां नात्र महानवमी प्राप्ता । तत्र पूर्वा महाष्टमी विज्ञेया तत्र पूजा कर्त्तव्या । तिथि द्वैधे तथा गरुडपुराणे-

पूजनीया शिवा सर्वैरेकधा भिन्नपर्वणि ।
इष्टं भूपादिभिः पूर्वं परं ग्राह्यं द्विजातिभिः ॥
पूर्वपर्वणि भुक्त्यर्थं मुक्त्यर्थं चापरेऽहनि ॥

भविष्योत्तरे-

कन्यागते सवितरि शुक्लपक्षेऽष्टमी च या ।
मूलानक्षत्रसंयुक्ता सा महानवमी स्मृता ॥
अष्टम्याश्च नवम्याश्च जगन्मातरमम्बिकाम् ।
पूजयित्वाऽऽश्विने मासि विशोको जायते हि सः[६७] ॥

ब्रह्मपुराणे-

अपोषितैः वस्त्रधूपैर्माल्यैः रत्नानुलेपनैः ।
दीपैरन्यैस्तथा भक्ष्यैः फलपुष्पैश्च धान्यकैः ॥
आमिषैर्विविधैर्वापि होमैर्ब्राह्मणस्तर्पणैः ।
विल्वपत्रैः श्रीफलैश्च चन्दनेन धृतेन च ॥
पशुभिः पानकैः हृद्यैः रात्रिजागरणेन च ।

---

६७. दुर्गाशयने प्रदोषः कर्मकालः उभयदिने प्रदोषस्पर्शे परेद्युः शुक्लाष्टमीत्वात् ।

दुर्गा गृहे तु शास्त्राणि पूजितानि च पण्डितैः ॥
वाद्यभाण्डानि चान्यानि विविधान्यायुधानि च ।
रात्रौ च शिल्पिभिस्तानि तानि पूज्यानि सर्वदा ॥

तथा च भागवते-

शुक्लपक्षे चतुर्थ्यान्तु देवी केशव मोचनम् ।
प्रातरेव तु पञ्चाम्यां स्नापयेच्छुद्धकैर्जलैः ॥
सप्तम्यां पत्रिकापूजा अष्टम्यां चाम्बु पोषणम् ।
पूजनं जागरश्चैव नवम्यां विधिवद् बलिम् ॥
संप्रेषणं दशम्याश्च क्रीडाकौतुकमङ्गलम् ।
नीराजनञ्च राज्ञः स्याद् बलवृद्धिकरं महत् ॥

पद्मपुराणे-

अष्टमी नवमी विद्धा नवम्या चाष्टमी युता ।
अर्द्धनारीश्वर प्राया उमामाहेश्वरी तिथिः ॥
अष्टमी नवमी युग्मे महोत्साहे महोत्सवः ।
शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपि ॥

यदा युग्मविशेषणं तदा तादृशं युग्ममुपलभ्य सूर्यग्रहणोऽर्द्धोदयादि मनस्युत्साहं प्राप्य देवतोत्सवः कर्त्तव्यः इत्युक्तं भवति । तिथिद्वैधे नवमी पूर्वविद्धैवेति साधारणः । पद्मपुराणे-

श्रावणी दुर्गनवमी तथा दूर्वाष्टमी तिथिः ।
पूर्वविद्धैव कर्त्तव्या शिविरात्रिर्बलेर्दिनम् ॥

## अथ अपराजिता दशमी

तत्र शतानन्दसंग्रहे-

श्रवणेन युता चेत्स्याद्दशमी चापराजिता ।
तत्र निराजनां कृत्वा यात्रा कार्या जिगीषुणा ॥

त्र्यम्बर्के-

सुप्ते नारायणे देवे शायकान् यो बहिः क्षिपेत् ।
ब्रह्महा स भवेत् धन्वी संग्रामे भङ्गमाप्नुयात् ॥

नृपतेः द्विरावेधपुरःसरं यात्रा कार्या । तदाह वाल्मीकि-

दुर्गोत्सवानन्तर वैष्णवर्क्षे तिथौ दशम्यामपराजितायाः ।
रामो जिगीषुर्दशदिक्षु वेद्यं कृत्वा जगामारि पुरं प्रवीरः ॥

शुक्लादशमी परविद्धा ग्राह्या ।

## अथ कुष्माण्डदशमी

तत्र शाम्बपुराणे-

आश्विनस्य सिते पक्षे दशम्यां नियतः शुचिः ।
प्रातः स्नानादिकं कर्म कृत्वा पश्चादनन्तरम् ॥
एवं न्यासविद्धिं कृत्वा ततः पूजां समाचरेत् ॥
शिवं दशरथं तत्र लोलां देवीञ्च पूजयेत् ।
बहिः कुष्माण्डकुसुमैः दशाहं दशभिः क्रमात् ॥
पूजयेत् विधिवत् तावत् यावत् कृष्णचतुर्थिका ।
तस्यामर्घ्यं शशाङ्काय दत्त्वा न विधवा भवेत् ॥

## अथ कौमुदीपूर्णिमा

तत्र लिङ्गपुराणे-

आश्विने पौर्णमास्यान्तु चरेत् जागरणं निशि ।
कौमुदी सा समाख्याता कार्या लोकैर्विभूतये ॥
कौमुद्यां पूजयेत्लक्ष्मीमिन्द्रमैरावतं स्थितम् ।
सुगन्धैर्निशि सर्वेश अक्षैर्जागरणं चरेत् ॥
तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां कराति यः ॥

सतानन्दसंग्रहे-

को जागर्त्ति वचोऽभिधाय पुरुषं लक्ष्मीस्त्यजेत् सुप्तकम् ।
शुक्लां पञ्चदशीं निशिं स्वयमिषे लोकस्ततो जागृयात् ॥

लक्ष्मीपूजा भविष्योत्तरे द्रष्टव्या, पूजानन्तरम्-

एवं कृत्वा विधानेन द्यूतक्रीडा समाचरेत् ।
ब्राह्मणैक्षत्रियैर्वैश्यैः शूद्रैश्चैवान्यजातिभिः ॥
ताम्बूलैर्नारिकेलैश्च वस्त्रैश्चैव कपर्दकैः ।
परस्परञ्च दातव्यं पूजां देव्यै समर्पयेत् ।
एवं यः कुरुते भक्त्या तस्य देवी प्रिया भवेत् ॥

तिथिद्वैधे भास्वतः अस्तादुपरि यदा घटिकात्रयपर्यन्तमधिकं व्याप्यपञ्चदशीं व्याप्नोति तदा परदिने कर्त्तव्यम् । त्रिभिमुहूर्त्तैर्विध्यन्ति इति वचनात् । अन्यथा पूर्वदिने एवं रात्रावधि निशिं प्रधानत्वात् इति।

## अथ चित्राकृष्णचतुर्दशी

स्कन्दपुराणे-

कार्त्तिके भौमवारे तु चित्राकृष्णचतुर्दशी ।
तस्यामाराधितः स्थाणुः नरो शिव पुरं ध्रुवम् ॥

## अथ प्रदीपामावास्या

तत्र परिशिष्टे-

तुलास्थे भास्करे दर्शे उपास्तसमये रवौ ।
एकैकांस्तु पितृन् त्रींस्त्रीन् प्रदद्यात् पितृयज्ञवत् ॥

पितृयज्ञशब्देन पिण्डपितृयज्ञेन । किन्तु तर्पणवत् ।

तथा च स्कन्दपुराणे-

एकैकमञ्जलिं देवान् द्वौ द्वौ च सनकादयः ।
अर्हन्ति पितरस्त्रीन् स्त्रियैत्वेकैकमञ्जलिम् ॥

तिथिद्वैधे निर्णयमाह स्मृतिः-

अमा वसति यद्रात्रौ तत्र दोषं प्रदापयेत् ।
तर्पणं पिण्डदानञ्च श्राद्धञ्चैवापरेऽहनि ॥

यदा उभयत्र रात्रावमावास्या सम्भवेत्तद्विषये आह कृत्य कौमुद्याम्-

तुलास्ये भास्करे दर्शे श्राद्धं कृत्वा पराह्निकम् ।
दीपदानं ततः कुर्यात् उपास्तसमये रवौ ॥

सम्पूर्णमावास्याविषयमेतत् । वाक्यरत्नाबल्याम्-

तुलाप्रत्यागते सूर्ये याऽमावास्या तिथिर्भवेत् ।
उपास्तसमये दीपान् पितृन् दद्याच्छुचिः शुचिः ॥

शुचिः शुचिरिति वचनात् द्विर्वोपोषित इति स्मृतिरत्नाबल्याम् ।

दीपदाने गयाश्राद्धे श्राद्धे चाभ्युदये तथा ।
जयन्त्यां पारणं चैव न दोषो निशि भोजनम् ॥

यत्तु वाक्यं पठति न च तत्र मूलं दृश्यते दीपदाने सायं सन्ध्यासमागम

एव कालः । पितृयज्ञवदिति शब्देन दक्षिणाभिमुखेनावाहनादि पुरःसरं दीपाः दातव्याः । तत्र परिशिष्टे-

शरत् पक्वै ब्रीहिपिष्टैरनाश्विनैस्त्वपूपकैः ।
आहार्यैर्हविषा दीपान् प्रदद्यात् गन्धलेपितान् ॥
रतसालङ्कृते देशे प्रस्तीर्णे तिलदर्भकैः ।
श्यामावल्लोजकुसुमैरर्च्चितैर्गन्धपुष्पकैः ॥
कार्पासवर्त्तिभिश्चैव शाल्मलोक विवर्जितैः ।
वसामेदो विरहितैर्न वेश्मनि कदा च न ॥
दद्यात् यात्रां न च गृहे गुग्गुलधूपसर्पिषा ।
ज्योतिर्लोकमवाप्नोति तुलास्थे दीपदर्शिते ॥
तस्मिन् वै दिशमाकाशं वैश्वदेवपुरःसरम् ।
पितृन् पितामहान् दद्याज्जीवन्तं दर्शयेत् पृथक् ॥
आयुर्बलं धनं पुत्रमारोग्यं सुमनोहरम् ।
दीप्यमानं प्रदीपञ्च दत्वा यातीति सन्ततम् ॥

इदं निनिध्यादन्यत्र नित्यत्वे प्रामाण्याभावात् काम्यम् । अत्रायं संक्षेपः। बहिःस्थण्डिले सितरजसा कृष्टे वास्तुप्रदेशे तिलदर्भान् विस्तीर्य गन्धपुष्पधूपदीपैरभ्यर्च्च्य प्राग्दिशाकाशं पश्यन् क्रत्वादि विश्वेदेवा एष वो दीप इति दशदीपान् दत्वा निवीति उदङ्मुखः सनकादि-सप्तमनुष्येभ्यः चतुर्दशदीपान् दत्वा अपसव्येन दक्षिणदिशाकाशं पश्यन् अमुकशर्मन् पितरेष ते दीप इति । तथा पितामह एष ते दीपः प्रपितामहः एष ते दीप इति । तथा मातृ मातामहांश्च स्त्रीं स्त्रींश्च दद्यादिति शतानन्दः। ततो वधूनां गृहदेवतादीनां चेति एकोदिष्टादावपि-

अस्त्रशस्त्रहतानाञ्च भूतानां भूतदर्शयोः ।
उज्ज्वलज्योतिषा देहं निर्दहेत् व्योमवर्त्मना ॥

## अथ सुखरात्रि

तत्र धवलसंग्रहे-

कार्त्तिके मासि शुक्ताद्यतिथौ च कुसुमांशुकै ।
सुखार्थे सुखरात्रिः स्यात् कार्या राष्ट्रसुखाय वै ॥

शुक्लाघतिथौ= अमावास्यायामित्यर्थः । अतएव कृत्यकौमुद्यां स्मृतिः-

अमायाः वै तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
सुखरात्रेरुषःकाले प्रदीपोज्वलितालये ॥

धवलसंग्रहे-

सुशोभैः कुसुमैर्गन्धैर्दधिगोरुचनाफलैः ।
बन्धुबान्धव वधूश्च पृच्छेत् कुशलया गिरा ॥
पूजयेत्तु तथा लक्ष्मीमलक्ष्मीं मलनाशिनीम् ।
लक्ष्मीं पञ्चपताकाभिः ध्वजमेकं गृहे न्यसेत् ॥

## अथ गोष्ठाष्टमी

तत्र कूर्मपुराणे-

गोष्ठाष्टम्यां गवां पूजां गोग्रासो गोप्रदक्षिणम् ।
गवामनुगमः कार्यः सर्वान् कामान्नभीप्सिता ॥

## अथ देवोत्थापन एकादशी

भविष्योत्तरे-

ततो विवुध्यते देवः श्रीमान् शङ्खगदाधरः ।
कार्त्तिकशुक्लपक्षस्य एकादश्यां यथा सुतः ॥
समुत्थिते तथा विष्णोः क्रिया सर्वाः प्रवर्त्तयेत् ॥

## अथ प्रथमाष्टमी

तत्र उत्कलेषु अधुना पूजावन्दापनादिकं कुर्वन्ति देशान्तरे नास्ति । तथा आर्षवचनेऽपि नास्ति, तथा च-

मध्याह्नादधिकं किञ्चित् परतः प्रथमाष्टमी ।
तत्र पूजादिकं कार्यं न्यूना चेत् पूर्ववासरे ॥

ये तु वाक्यं पठन्ति न च तन्मूले दृश्यते ।

कृष्णपक्षेऽष्टमी यत्र कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्त्तव्या परविद्धा न कर्हिचित् ॥

इति वचनात् तिथिद्वैधे पूर्वदिने पूजादिकं कार्यमिति ।

## अथ दीपावलिकोत्सवः

तत्र देवीपुराणे-

तुलास्थे दीपदानेन पूजा कार्या महाफला ।
दीपवृक्षाश्च कर्त्तव्या दीपचक्रमथाऽपरम् ॥
दीपयात्रा प्रकर्त्तव्या चतुर्दश्यां कुहूषु च ।
सिनीवाल्यां च त्वथवा वत्स कार्यं महाफलम् ॥

एतेन चतुर्दश्याममावास्यां प्रतिपत्सु निशासम्बन्धिनीषु च दीपदानं प्रतिपादितम् । कृष्णपक्षानुवृत्तौ ।

भविष्योत्तरे-

नरकाय प्रदातव्याः दीपाः सम्पूज्या देवताः ।
ततः प्रदोषसमये दीपान् दद्यान् मनोरमान् ॥

नरकाय परकगमनपरिहाराय अत्र देवोत्थापनानन्तरामावास्यायाः कार्त्तिककृष्णत्वमुक्तम् । चैत्रशुक्लादिकामाह इत्यभिप्रायेण ।

## अथ प्रावरणषष्ठी

तत्र कूर्मपुराणे-

या तु मार्गशीरे शुक्ला महाष्टमी नराधिप ।
देवद्विजसुहृद्भ्यश्च शीतघ्नं तत्र कारयेत् ॥

शीतघ्नशब्देन वस्त्रकम्बलपटप्रभृतयः ।

## अथ पाषाणचतुर्दशी

तत्र देवीपुराणे-

वृश्चिके शुक्लपक्षे तु या पाषाणचतुर्दशी ।
तस्यामाराधयेद् गौरीं नक्तं पाषाणभक्षणे ॥

पाषाणकारपिष्टकमिति जीमूतवाहनः । नक्तमिति वचनात्तथा नक्तकालः प्रधानम् । यदा उभयत्र रात्रौ चतुर्दश्याः सम्भवस्तदा परदिने पूजादिकं कर्त्तव्यम् ।

## अथ बकुलामावास्या

तत्र धवलसंग्रहे-

पौषे तु बकुलक्षीरपायसैस्तर्पयेत् पितृन् ॥
अमावास्यायामिति ॥

## अथ भद्राष्टमी

तत्र शतानन्दसंग्रहे-

पौषे मासि यदा विप्र शुक्लाष्टम्यां बुधो भवेत् ।
तदा तत् स्यात् महापुण्या अहो भद्रेति कीर्त्तिता ॥
तस्यां स्नानं तथा दानं तर्पणं विप्रभोजनम् ।
सुप्रीतये कृतं देवी शतसाहस्रिकं भवेत् ॥

## अथ पुष्पवन्दापना

तत्र ब्रह्मपुराणे-

इदं जगत् पुरा लक्ष्म्या त्यक्तं मासान् ततो हरि ।
पुरन्दरश्च सोमश्च तथा पुषाबृहस्पती ॥
पश्चैते पुष्यसंयोगे पौर्णमास्यां तपोबलात् ।
अलङ्कृतश्च पुनश्च सौभाग्योत्साहलक्ष्मीभिः ॥
तस्मान्नरैः पुष्ययोगे तत्र सौभाग्यवृद्धये ।
धनैर्विप्रांश्च सन्तर्प्य नवैर्वस्त्रैः सुशोभितान् ॥
ततः पुष्टिकरं हृद्यं भोक्तव्यं घृतपायसम् ।
पुष्ययोगेषु कर्त्तव्यं राज्ञा स्नानं च सर्वदा ॥

पुष्ययोगनेति वचनात् नक्षत्रमात्रे पूजावन्दापनादिकं कर्त्तव्यम् ।
नक्षत्रद्वैधे-

उभयत्र त्रिमुहूर्त्तस्य नक्षत्रं व्रतदानयोः ।
दिनद्वये तथात्वे तु पूर्वं स्याद् बलवत्तरः ॥

इति माधवीकारः ।

## अथ घृतकम्बलम्

तत्र विष्णुधर्मे-

आलिङ्गवेदिपर्यन्तं यो दद्यात् घृतकम्बलम् ।
जागरं नृत्यगीताद्यैः सत्कृत्य तत्र पर्वणि ॥

मन्वन्तरसहस्राणि शिवलोके महीयते ॥

पर्वणि- मकरसंक्रान्तौ ।

## अथ माघकृष्णचतुर्दशी

तत्र शतानन्दसंग्रहे-

माघे मासि रटन्त्यापः कृष्णपक्षे चतुर्दशीम् ।
ब्रह्मघ्नं वा सुरापं वा कं पतन्तं पुनीमहे ॥

वराहपुराणे-

अरुणोदयवेलायामारटन्तीति नित्यशः ।
नियुक्ताः विष्णुना सर्वाः कस्य पापं पुनीमहे ॥
यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्दशीम् ।
यमुनायां विशेषेण नियतस्तर्पयेत् पुमान् ॥

अरुणोदयवचनादुभयदिने अरुणोदयव्याप्तिश्चेत्तदा पूर्वदिने स्नानादिकं कर्त्तव्यम् ।

## अथ वरदाचतुर्थी

तत्र नारदीये-

माघकृष्णचतुर्थ्यान्तु गौरीमाराधयेद् बुधः ।
चतुर्थी वरदानाम गौरी तत्र सुपूजिता ॥

शतानन्दसंग्रहे-

माघशुक्लचतुर्थ्यान्तु वरदामाराध्यश्रियमेति ॥

## अथ श्रीपञ्चमी

तत्र धवलसंग्रहे-

पञ्चम्यां कुन्दकुसुमैः पूज्या कौन्दी समृद्धये ।
सौभाग्यमुत्तमं कुर्यात् पञ्चम्यां श्रीरपि श्रियम् ॥

पञ्चम्याञ्च श्रियाः देव्याः पिष्टकैः स्वाध्यायिकछात्रगणैः पूजनं श्रियाः प्रकीर्त्तितम् इति शतानन्दः । कौन्दी= सरस्वती ।

## अथ माघसप्तमी

तत्र बृहस्पतिः-

सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां स्नानं तस्यां महाफलम् ॥

मात्स्ये-माघमासस्य सप्तम्यामुदयत्येव भास्करे ।
विधिवत्तु तिलस्नानं महापातकनाशनम् ॥

स्मृतिसमुच्चये-

सूर्याय फलगन्धार्कपत्ररक्तप्रसूनवत् ।
दद्यात्तुत्थाय तत्रार्घ्यं सप्तधा यदि वा त्रिधा ॥

मत्स्ये मन्त्रो यथा-

यद् यज्जन्म कृतं पापं मया सप्तसु जन्मसु ।
तस्य रोगं च शोकञ्च माकरी हन्तु सप्तमी ॥

इति स्नानमन्त्रः अर्घ्यमन्त्रो यथा-

जननी सर्वभूतानां सप्तमी सप्तसाप्तिके ।
सप्तव्याहृतिके देवि नमस्ते रविमण्डले ॥

नमस्कारमन्त्रो यथा-

सप्त सप्तिवहः प्रीत सप्त दीप प्रदीपकः ।
सप्तम्याञ्च नमस्तुभ्यं नमोऽनन्ताय वेधसे ॥

अत्र अक्षारभोजनं कर्त्तव्यम् । तत्र द्रव्याणि यथा-

गव्यमाज्यञ्च धान्यञ्च तिलाश्च मुद्गयावकौ ।
अक्षीरा कथिता ह्येता अन्ये क्षीराः प्रकीर्त्तिताः ॥
आमतण्डुलमुद्गाश्च सद्योदधि घृतं पयः ।
दन्तकाष्ठं तथैवापस्त्रिकटुस्त्रिफला यथा ।
भोज्यपात्रं तथैवैतदक्षीरं परिवर्जयेत् ॥

शुण्ठिपिप्पलीमरीचेषु त्रिकटुशब्दः । हरितकी-आमलकीविभीतकेषु त्रिफलाशब्दः । अरुणोदयः वचनादुभयत्रारुणोदयव्याप्तिश्चेत्तदा स्नानं कृत्वा अक्षीरादिभोजनम् ।

देवलः-

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथि सकला ज्ञेया स्नानदानजापादिषु ॥

## अथ भीष्माष्टमी

तत्र पुराणे-

माघे मासि सिताष्टम्यां सलीलं भीष्मतर्पणम् ।
श्राद्धञ्च ये नराः कुर्युः ते स्युः सन्तति भागिनः ॥
वैयाघ्रपादगोत्राय साङ्कृत्य प्रवराय च ।
अपुत्राय ददाम्येत् जलं भीष्माय वर्मणे ॥

एतच्च ब्राह्मणव्यतिरिक्तानामेवेति केचित् । तथा च मरीचिः-

ब्राह्मणो ह्यन्यवर्णस्य यः करोत्यौर्ध्वदैहिकम् ।
तद्वर्णत्वमसौ याति इहलोके परत्र च ॥
सवर्णेभ्यो जलं देयं नासवर्णे कथञ्चन ॥

दोषश्रवणं स्मृत्यन्तरे- सवर्णविषयमिच्छति धवलसंग्रहे-

अष्टम्यान्तु सिते पक्षे भीष्माय तु तिलोदकम् ।
अन्नञ्च विधिवद् दद्युः सर्वे वर्णाः द्विजातयः ॥

तथा स्मृत्यन्तरे-

वसून् रुद्रान् तथादित्यान् नमस्कारस्वधान्वितान् ।
एते सर्वस्य पितर इष्टापूर्त्ताश्च मानुषाः ॥

इति वचनेन केचिदेव मत्पालिनो भीष्मस्य सर्वपितृत्वादित्याशयः कृत्यकौमुद्याम्-

शुक्लाष्टम्यां तु माघस्य दद्याद् भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

इति पापक्षयवचनात् जीवत् पितृकस्यापि तर्पणमात्रेऽधिकारोऽस्ति, एकमुद्दिश्य यच्छ्राद्धं तदेकोद्दिष्टमिति वचनात् । अतएव [६८]कुतपकारव्यापिन्यष्टकादिकं कार्यम् ।

---

६८. भविष्यपुराणे-

प्रविश्यभानुः स्वच्छायां शङ्कुवद्यत्र तिष्ठति ।
स कालः कुतपो नाम मन्दीभूतस्य संज्ञया ॥ का.मा. पृ- १२८ ।

नारदः-

सन्त्यज्य सप्तमं भागम्, अष्टमं क्रमते यदा ।

## अथ भीमद्वादशी

धवलसंग्रहे-

द्वादश्यां पङ्क्तिकाकारं कृत्वा पापान् प्रमुच्यते ॥

स्मृत्यन्तरे-

तिलोद्वर्त्ती तिलस्नायी तिलोहोमी तिलोदकी ।
तिलदाता च भोक्ता च षट्तिली नावसीदति ॥
सकृच्च षट्तिलं कृत्वा सर्वपापैः प्रमुच्यते ।
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

तैलग्रहणे तथा दोषमाह पद्मपुराणे विद्याधरं प्रति भृगुवाक्यम् ।

उपौष्यैकादशीं माघे तैलाभ्यङ्गः कृतस्त्वया ।
द्वादश्यां यद् भवेदेव तेन व्याघ्रमुखो भवेत् ॥

## अथ अग्न्युत्सवः

तत्र लिङ्गपुराणे-

बह्न्युत्सवः सिते पक्षे माघे च प्रयतो निशि ।
द्वादश्यां पञ्चदश्यां वा भवेद् बह्निमहोत्सवः ॥

## अथ शिवरात्रिचतुर्दशी

व्रतं निरूप्यते- तत्र शिवरात्रि व्रतमेकादशी जयन्तीव्रतवत् संयोगतः पृथकत्वन्यायेन नित्यं काम्यश्चेत्युक्तमिति माधवीकारः । तत्र नित्यमकरणे प्रत्ववायो वेष्टो नित्यानित्यश।ब्दैरवगन्तव्यम् । तत्राकरणे प्रत्यवायः स्कन्दपुराणे पठ्यते-

परात् परतरं नास्ति शिवरात्रेः परात् परम् ।

---

स कालः कुतपो ज्ञेयो मन्दीभूतस्य संज्ञया ॥ का.मा. पृ- १२८ ।

वायुपुराणे-

दिवसस्याष्टमे भागे मन्दी भवति भास्करः ।
स कालः कुतपो नाम पितृणां दत्तमक्षयम् ॥ का.मा. पृ- १२८ ।

आपस्तम्ब-

सप्तमात्परतो यस्तु नवमात्पूर्वतः स्थितः ।
उभयोरपि मध्यस्थ कुतपः स उदाहृतः ॥ का.मा. पृ-१२८ ।

न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम् ॥
जन्तुर्जन्म सहस्रेषु भ्रमते नात्र संशयः ॥

इति वीप्सापि तत्रैव पठिता ।

वर्षे वर्षे महादेवि नरो नारी पतिव्रता ।
शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत् ॥

नित्यनिश्चलशब्दः तत्रैव पठ्यते ।

माघकृष्णचतुर्दश्यां यः शिवं संयतेन्द्रियः ।
मुमुक्षुः पूजयेन्नित्यं स लभेत् इप्सितं फलम् ॥
अर्णवो यदि वा शुष्येत् क्षीयते हिमवान् अपि ।
मेरुमन्दरलङ्काश्च श्रीशैलो विन्ध्य एव च ।
चलन्त्येते कदाचित् वै निश्चलं हि शिवव्रतम् ॥

इति काम्यम् । तत् फलश्रवणादवगन्तव्यम् ।

स्कन्दपुराणे-

शिवं च पूजयित्वा यो जागर्त्ति च चतुर्दशीम् ।
मातुः पयोधररसं न पिबेत् स कदा च न ॥
यदीच्छेत् वाञ्छितान् भोगान् दिवि देवमनोरमान् ।
आगमोक्तविधिं कृत्वा प्राप्नोति परमं पदम् ॥

ननु व्रतस्वरुपं त्रिविधम् । उपवासः पूजा, जागरणेश्चेति । तदुक्तं नागरखण्डे-

उपवासप्रभावेण बलादपि च जागरात् ।
शिवरात्रेस्तथा तस्य लिङ्गस्यापि च पूजया ।
अक्षयान् लभते भोगान् शिवसायुज्यमाप्नुयात् ॥

शिवकाण्डे-

स्वयञ्च लिङ्गमभ्यर्च्य सोपवासः सजागरः ।
अजानन्नपि निष्पापो निषादो गणतां गतः ॥

अत्रेदं चिन्त्यते । किमेतत् उपवासजागरणपूजाव्रतस्वरूपे विकल्प्यन्ते तत्तु समुच्चयम् । ते तत्र विकल्प्यन्ते । तत्र विकल्प इति, भावप्राप्तं एकैकस्येवेतरापेक्षया विधानात् । तथा च केवलोपवासः पठ्यते-

अखण्डितव्रतो यो हि शिवरात्रिमुपोषयेत् ।
सर्वान् कामान् अवाप्नोति रुद्रेण सह मोदते ॥

तथा केवलं जागरणं पठ्यते-

कश्चित् पुण्यविशेषेण व्रतहीनोऽपि यः पुमान् ।
जागरं कुरुते तत्र स रुद्रसमतां व्रजेत् ॥

केवल पूजा पठ्यते- यः पूजयति भक्त्येशमनेन फलतां व्रजेत् ॥
तस्मादुपावासादयस्त्रयो विकल्प्यन्ते । यदि नागरखण्डसह्यखण्डयोः समुच्चयविधिरस्ति इति उच्यते तर्हि प्रत्येकं समुच्चयं वा यथेच्छमनुष्ठीयमिति प्राप्तं ब्रह्मव्रते वैश्वानरन्यायेन समुच्चय एवोपपन्नः इति माधवीकारः । सिद्धान्ते- उपवाससक्तौ अथवा शिवरात्रिश्च पूजाजागरणैर्नयेदिति माधवीकारः । अधुना तिथिद्वैधे निरूप्यते । अत्र अनन्तभट्टीये-

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥
कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रि चतुर्दशी ।
एताः पूर्वयुताः कार्याः तिथ्यन्ते पारणं भवेत् ॥

कालादर्शे वायुपुराणे-

त्रयोदश्यस्तगे सूर्ये चतसृष्वेव नाडिषु ।
भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् ॥
अर्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी ।
तित्तिथावेव कुर्वीत शिवरात्रिव्रतं व्रती ॥

इति ईशानसहितायाम्- तथा ह नारदसहितायाम्-

अर्द्धरात्रयुता यत्र माघकृष्णचतुर्दशी ।
शिवरात्रिव्रतं तत्र सोऽश्वमेधफलं लभेत् ॥

स्मृत्यन्तरे-

भवेत् यत्र त्रयोदश्यां भूतव्याप्ता महानिशा ।
शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा ॥

तथा च पद्मपुराणे- ईशानसहितायामपि अयमेव पाठः ।

ब्रह्मवैवर्त्ते-

रुद्रव्रतेषु सर्वेषु कर्त्तव्या सम्मुखीतिथिः ।
अन्येषु व्रतकल्पेषु पूर्वविद्धामुपावसेत् ॥

दर्शयोगनिन्दा च स्कन्दपुराणे दर्शिता-

महतामपि पापानां दृष्टा वै निष्कृतिः पुरा ।
न दृष्टा कुर्वतां पुंसां कुहूर्युक्तां तिथिं शिवम् ॥

अतएव कारिकायां लिखितम्-

प्रदोषे वा निशीथे वा द्वोयोर्वा याऽस्ति सा भवेत् ।
शिवरात्रि व्रते तत्र द्वयोः सत्ता प्रशस्यते ॥
तदभावे निशीथैकव्याप्तापि परिगृह्यताम् ।
तस्याश्चासम्भवे ग्राह्या प्रदोषव्यापिनी तिथिः ॥

ननु यदा पूर्वविद्धायामुपवासस्तदा पूर्वेद्युः किं तिथ्यन्ते पारणं किं वा तत्तिथिमध्ये । शस्तं तु पक्षद्वयेऽपि समानम् । तत्तु तिथ्यन्ते पारणं वचनं पूर्वं समुदाहृतम् । तिथिमध्ये पारणवचनन्तु स्कन्दपुराणे पठ्यते।

उपोषणं चतुर्दश्यां चतुर्दश्यान्तु पारणम् ।
कृतैः सुकृतलक्षैश्च लभ्यते वाऽथवा न वा ॥
तिथीनामेव सर्वासामुपवासः व्रतादिषु ।
तिथ्यन्ते पारणं कुर्यात् विना शिवचतुर्दशीम् ॥

द्विविधं शास्त्रम् । तस्य द्विविधस्य शास्त्रस्य प्रतिपत् प्रकरणोक्तन्यायेन व्यवस्था द्रष्टव्या । यदा यामत्रयादर्वाक् एव चतुर्दशी समाप्यते तदा तिथ्यन्ते पारणम् । यदा चतुर्दशी यामत्रयमतिक्रमति तदा चतुर्दशी मध्ये पूर्वाह्णे पारणं कुर्यात् इति । अतएव माधवीकारेण कारिकायां लिखितम्- तिथ्यन्ते पारणं यामत्रयादर्वाक् समापने । अन्यथा पारणं प्रातरन्यतिथ्युपवासादिति । यदा रविर्भौमवारो वा भवति तदोत्तमव्रतं स्यात् । तदुक्तं स्कन्दपुराणे-

माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् ।
भौमो वाऽथ भवेद् देवि कर्त्तव्यं व्रतमुत्तमम् ॥
शिवयोगस्य योगो वै तद् भवेदुत्तमोत्तमम् ॥

स्कन्दपुराणे-

ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै ।
संस्थितानि भवन्तीह भूतायां पारणे कृते ॥

## अथ दोलयात्रा

तत्र ब्रह्मपुराणे-

नरो दोलगतं दृष्ट्वा गोविन्दं पुरुषोत्तमम् ।
फाल्गुण्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥

शतानन्दसंग्रहे-

फाल्गुने पौर्णमास्यान्तु कार्यः फल्गुमहोत्सवः ।
गोविन्दो दोलया क्रीडे त्तत्रार्यम्णि गते रवौ ॥

आर्यम्णि= उत्तराफाल्गुनि ।

## अथ चैत्रकृष्णचतुर्दशी

तत्र शतानन्दसंग्रहे-

चैत्रकृष्णचतुर्दश्यां यः स्नायात् शिवसन्निधौ ।
गङ्गाया अविशेषेण न स प्रेतोऽभिजायते ॥

भौमवारे विशेषमाह-

चैत्रकृष्णचतुर्दश्यामङ्गारकं दिनं यदि ।
पिशाचत्वं पुनर्न स्यात् गङ्गायां स्नानभोजने ॥

॥ इति स्मृतिसारसंग्रहे पर्वनिर्णयप्रकरणम् ॥

## अथ चैत्रमासकृत्यम्

अधुना मासकृत्यादि किञ्चिदुच्यते । प्रथमं तावत् चैत्रमासनियमाह भागवते-

चैत्रन्तु नियतो मासमेकभक्तेन यः क्षिपेत् ।
सुवर्णमणिमुक्ताढ्यकुले महति जायते ॥

## अथ वैशाखमासकृत्यम्

मात्स्ये-वैशाखे पुष्पलवणे वर्जयित्वा तु गोप्रदः ।
भुक्त्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह ॥

स्कान्दे-

वैशाखः यः क्षिपेन्मासमेकभक्तेन मानवः ।
स याति श्रेष्ठतां लोके पूजितो धनवानपि ॥

राजमार्त्तण्डे-

तुलामकरमेषे तु प्रातः स्नानं प्रसश्यते ।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥

यत्तु ब्रह्मसिद्धान्ते-

अमावास्यापरिच्छिन्नो मासः स्याद् ब्राह्मणस्य तु ।
संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः ॥

वचनविशेषात् बाधविकल्पव्यवस्थानात् परे वलीयांस इति न्यायात् । व्यवस्थापत्तेः । तथापि देशाचारात् मासनिर्णयोऽवगम्यते । यथाह मनुः-

यस्मिन् देशे य आचार इति ।

## अथ ज्येष्ठमासकृत्यम्

स्कान्दे-

ज्येष्ठोमूलन्तु यो मासमेकभक्तं समाचरेत् ।
भ्रातृणां भवति श्रेष्ठो भोगां श्चाप्नोति पुष्कलान् ॥

## अथ आषाढमासकृत्यम्

भारते- आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः ।
बहुधनो बहुधान्यो बहुपुत्रश्च जायते ॥

## अथ श्रावणमासकृत्यम्

भारते- श्रावणं नियमो मासमेकभक्तेन यः क्षिपेत् ।
प्रजावान् वाहनाढ्यश्च बहुपुत्रश्च जायते[६९] ॥

## अथ भाद्रमासकृत्यम्

तत्र स्कन्दपुराणे-

पौष्ठपदं तु यो मास एकाहारो भवेन्नरः ।
गवाढ्यं स्फीतमतुलमैश्वर्यं प्रतिपद्यते ॥

---

६९. यत्र तत्राभिषेकेण पूज्यते ज्ञातिवर्द्धनम् इति मुद्रित कालदीपपाठः पृ-११३ ।

## अथ आश्विनमासकृत्यम्

भारते-

अथैवाश्वयुजं मासमेकभक्तेन यः क्षिपेत् ।
प्रजावान् वाहनाढ्यश्च बहुपुत्रश्च जायते ॥

## अथ कार्त्तिकमासकृत्यम्

स्कन्दपुराणे-

कार्त्तिकं व्यापि यो मासमेकभक्तेन तिष्ठति ।
सोऽश्वमेधफलं प्राप्य बह्निलोके महीयते ॥

नारदीये-

एकभक्तेन नक्तेन तथैवायाचितेन च ।
कृते व्रते धरानाथो जायते दीपमालिनि ॥

विष्णुरहस्ये-

सुपुण्ये कार्त्तिके मासि देवर्षिपितृसेविते ।
क्रियमाणे व्रते नृणां स्वल्पेऽपि च महत्फलम् ॥

नारदीये-

मांसाशिनो हि भूपाला अत्यर्थं मृगयारताः ।
ते मांसं कार्त्तिके त्यक्त्वा गताः विष्ण्वालयं शुभम् ॥
कार्त्तिके वर्जयेत्तैलं कार्त्तिके वर्जयेन्मधु ।
कार्त्तिके वर्जयेत्कांस्यं कार्त्तिके वर्जयेत् स्त्रियम् ॥
न मत्स्यं भक्षयेन्मासं न कूर्मं नान्यदेव हि ।
चाण्डलो जायते राजन् कार्त्तिके मांसभक्षणात् ॥
अव्रतेन क्षिपेद् यत्तु मासं दामोदरप्रियम् ।
तिर्यग्योनिमवाप्नोति सर्वधर्मबहिष्कृतः ॥

कल्पतरौ नांदीपुराणे-

यो नरः कार्त्तिके मासि मांसं तु परिवर्जयेत् ।
संवत्सरस्य लभते पुण्यं मांसविवर्जनात् ॥

राजमार्त्तण्डे-

तुलामकरमेषेषु प्रातः स्नानं प्रशस्यते ।

हविष्यं ब्रह्मचर्यञ्च महापातकनाशनम् ॥

पितामहः-

कार्त्तिकस्य तु यत् स्नानं माघे मासि विशेषतः ।
कृच्छ्रादिनियमानाञ्च चान्द्रमासो विधीयते ॥

विष्णुः-

कार्त्तिकोऽग्निदैवत्यः अग्निश्च सर्वदेवानां मुखम् ।
तस्मात् कार्त्तिके मासि बह्हिसायी जपनिरतः ॥

सकृदेव हविष्याशी संवत्सरकृतपापात् मुक्तो भवति ।

कार्त्तिकं सकलं मासं बह्हिः सायीजितेन्द्रियः ।
जपन् हविष्यभुग्दान्तः सर्वपापैः प्रमुच्यते ॥

इति वचनात् चान्द्रो मासः । कार्त्तिकमासविहितं स्नानमनेन एव वा । सकलशब्देन त्रिंशद्दिनानि वर्त्तन्त इत्यर्थः । तथा च सिद्धान्तशिरोमणौ-

मस्यन्ते परिमीयन्ते स्वकलाबृद्धिहानितः ॥

तुलामकरमेषेषु इति यदुक्तं तेनान्यदेव सौरमासत्रयमेककर्मोच्यते । नान्यस्य दिवाकरः । यत्तु मासनिर्णये-

अमावास्यापरिच्छिन्नो मासः स्याद् ब्राह्मणस्य तु ।
संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः ॥

इति वचनात् देशान्तरतो व्यवस्था । यस्मिन् देशे य आचार इति मनुः । बहिः स्नायात् सावित्रीं जपतीति वचनात् बहिर्नद्यादौ स्नानं कार्यम् । प्रकरणान्तराधिकरणन्यायेन काम्यस्नानान्तरं प्रातः शब्दश्चात्र सूर्योदयपूर्वकालवचनम् । यत्तु प्रातः कालो मुहूर्त्तां स्त्रीनिति मत्स्यपुराणादुक्तं तच्छ्राद्धादिविषयम् । एवं कार्त्तिके बह्हिस्नानमपि काम्यक्रिया । एतेन शूद्राणामप्यधिकारोऽस्ति । एवं सति कार्त्तिके बह्हिस्नानं प्रातःकालेतरकालेऽपि तेनैव न्यायेन काम्यस्नानान्तरमिति लक्ष्मीधरः । आरब्धे कार्त्तिके मासादिस्नाने व्याध्यादिनाऽसमर्थे धर्मप्रतिग्रहल्पे पुत्रदिना धर्मक्रयरूपमूल्यदानपूर्वकं कर्म कारयेत् । नान्यथा तत् सिद्धिरिति विद्याकरः । काम्यस्नाने इष्टोद्धृतपूर्त्तानां नावकाशः । पूर्त्तखातादिकर्मणि ।

. एतेषु काम्यस्नानेषु पुनर्न सर्वथा कृत्रिमादिजले प्राप्तिः ।
तदुक्तं शङ्खेन-

स्नानस्य बह्नितप्तेन तथैव परवारिणा ।
शरीरशुद्धिर्विज्ञेया किं पुनः बह्निसंयुता ॥
तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा ॥

एतदातुरविषयम् । यद्यादावसम्भवे पुनः स्वकारितेन विरोध इति कल्पतस्कारः । स्वकृतं पित्रादिकृतं वेति विद्याकरः । सर्वत्र एवम्भूत जलावगाहनासम्भवे परोदकादिनापि कर्त्तव्यम् । तथा शङ्खः-

नित्यं नैमित्तिकं काम्यं क्रिया मङ्गलकर्षणम् ।
तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैः ॥

इति स्मरणात् गायत्रीजपनिरत इति वचनात् आवश्यककृत्यान्तकवर्जित इति लक्ष्मीधरः । एतेन लक्ष्यपरिमितो जपः कार्यः । एतदुक्तं याज्ञवल्क्येन-

गोष्ठे वसन् ब्रह्मचारी मासमेकं पयोव्रतः ।
गायत्री जप्यनिरतः शुद्ध्यतेऽस्मिन् प्रतिग्रहात्[७०] ॥

एतदेव स्फुटीकृतं मनुना-

जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत् प्रतिग्रहात् ॥

एतदसमर्थे पुनः सहस्रपरिमितो बहिर्जपः प्रतिदिनं कार्यः । तथा च मनुः- सहस्रकृतस्त्वभ्यस्य बहिरेतत् त्रिकं द्विजः ।

महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते ॥

बहिः शब्दोऽत्र ग्रामाद् बहिरिति गोविन्दराजः । स्कन्दपुराणे-

जलान्ते चाग्न्यगारे वा जले देवालयेऽपि वा ।
गवां गोष्ठे पुण्यतीर्थे सिद्धक्षेत्रेऽथवा पुनः ॥

अनावृत्तदेश इति विद्याकरः । हविष्याशीति वचनात् । हविष्यद्रव्याणि यथा गौतमः- चरुभैक्ष्यसक्तुकणयावकशाकपयोदधि घृतमूलफलो-दकानि हवींष्युत्तरोत्तरपशस्तानि ॥

---

७०. तीर्थाभावेन कर्त्तव्यमुष्णोदकपरादकैः इति ।

छान्दोगपरिशिष्टे-

हविष्येषु यवाः मुख्यास्तदनु ब्रीहयः स्मृताः ।
माषको द्रवगौराश्च सर्वालाभे विवर्जयेत् ॥

मुख्याभावे प्रतिनिधिरपि शास्त्रार्थं इति निध्यधिकरणे दर्शितः । ब्रीहिः- शरत्पक्वधान्यम् । गौराः- श्वेतसर्षपाः । हविर्योग्यं- हविष्यमिति विज्ञानेश्वरः । मधुमासेतरं श्राद्धं देयमिति कल्पतरुकारः । केचित् हविष्युत्तरवचनानि कृत्वा पठन्ति ।

हैमन्तिकं सिताश्विन्नं धान्यं मुद्गास्तिलाः यवाः ।
कलाय मुद्गनीवाराः वास्तुकं हिड़मोचिकाः ॥
कालीयं कालशाकञ्च मूलकं केदुकेतरात् ।
कन्दः सैन्धवसामुद्रलवणे दधिसर्पिषी ॥
पयोऽनोद् घृतसारञ्च पनसाम्रौ हरितकी ।
पिप्पली लवली धात्री फलानि गुड़भैक्षवत् ॥
अतैलपक्वमूलञ्च हविष्याणि प्रचक्षते ॥

एतेन समूलमिति चिन्तामणौ । स विश्वमूलस्य शास्त्रत्वान्निश्चयेन तदर्थाः निश्चयात् । आदौ निश्चित्य शास्त्रार्थं ततो धर्मे प्रवर्त्तते इति बहुनिबन्ध-कारलिखितत्वात् इति ।

## अथ भीष्मपञ्चकम्

विष्णुरहस्ये-

भीष्मेण तद् यतः प्राप्तं व्रतं पञ्चदिनात्मकम् ।
सकाशाद् वासुदेवस्य तेनोक्तं भीष्मपञ्चकम् ॥
व्रतस्यास्य गुणान् वक्तुं कः शक्तः केशवादृते ।
व्रतं चैतन्महापुण्यं महापातकनाशनम् ॥
ततो व्रतं प्रयत्नेन कर्त्तव्यं भीष्मपञ्चकम् ।
कार्त्तिकस्यामलेपक्षे स्नात्वा सम्यग् धृतव्रतः ॥
एकादश्यान्तु गृह्णीयाद् व्रतं पञ्चदिनात्मकम् ॥

भविष्योत्तरे-

स्त्रीभिर्वा भर्त्तृवाक्येन कर्त्तव्यं सुखवर्द्धनम् ।

विधवाभिश्च कर्त्तव्यं पुत्रपौत्रविवृद्धये ॥
सर्वकामविवृद्ध्यर्थं मोक्षार्थमपि पाण्डव ॥

व्रतस्वरूपं विष्णुरहस्ये भविष्योत्तरे च द्रष्टव्यम् । ब्रह्मपुराणे-

एकादश्याः समारभ्य राकां यावत् प्रबोधने ।
वकोऽपि तत्र नाश्नीयात् मत्स्यं मांसञ्च केशव ॥

## अथ आकाशदीपदानम्

तदुक्तं पुष्करपुराणे-

तुलायां तिलतैलेन सायं सन्ध्यासमागमे ।
आकाशस्थितदीपञ्च यो दद्यात्तु हरिं प्रति ॥
महतीं श्रियमाप्नोति रूपसौभाग्यसम्पदम् ॥

तत्र तुलायामित्युपलक्षणम् । तत्र विष्णुधर्मोत्तरे-

आश्वयुज्यामतीतायां यावद्राका तु कार्त्तिकी ।
तावद्दीपप्रदस्याप्तं फलं प्रोक्तञ्च शाश्वतम् ॥
तावत्कालं प्रयच्छन्ति ये तु दीपं महानिशि ।
तुङ्गे देशे बहिस्तेषां महत् पुण्यफलं लभेत् ॥
अप्यन्धकारे गहने प्रकाशस्तेन जायते ।
प्रकाशान्नृपशार्दुल तेन याति परं सुखम् ॥

पुराणे- अत्युच्चैर्दीपमाकाशे यो दद्यात् कार्त्तिके निशि ।
सप्तजन्मकृतं पापं त्रिभिवर्षैर्व्यपोहति ॥

तथा च कालादर्शे-

तैलेचाश्वयुजं मासं दीपमाकाशवर्त्तिनम् ।
तुलास्थं हरये दत्वा महतीं श्रियमश्नुते ॥

दीपदाने सायंसन्ध्यासमागम एव कालः । दीपदानमन्त्रो यथा- शतानन्दसंग्रहे अपरार्कः-

दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥

इति श्लोकं पठित्वा अद्यादि वृश्चिकराशिरविसंक्रान्तिपर्यन्तं प्रतिदिनं सायमुपक्रम्य निशि नभसि वा । दीपस्थानमाह-

चतुष्पथेषु रथ्यासु ब्राह्मणोऽवसस्थे पुरे ।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥
दीपदानेन सर्वत्र महाफलमुपाश्नुते ॥

## अथ चातुर्मास्यव्रतारम्भः

तत्र सङ्कल्पः प्रातः कार्यः । स्मृत्यन्तरे-

प्रातः सङ्कल्पयेद् विद्वानुपवासव्रतादिकम् ॥

ब्रह्मपुराणे-

तस्माद् व्रतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः ॥

यद्यपि प्रातः पूर्णिमावर्त्तते न तु प्रतिपत्तथावपि प्रतिपदः सङ्कल्पमाश्रित्य प्रातरेव व्रतादिकं कर्त्तव्यम् । तथा च माधवीये-

अभावेऽपि प्रतिपदः सङ्कल्पः प्रातरिष्यते ॥

सनत्कुमारः-

एकादश्यान्तु गृह्णीयात् संक्रान्तौ कर्कटस्य वा ।
आषाढ्यां वा नरो मक्त्या चातुर्मास्योदितं व्रतम् ॥

वराहे-

आषाढशुक्लैकादश्यां पौर्णमास्यामथापि वा ।
चातुर्मास्य व्रतारम्भं कुर्यात् कर्कटसंक्रमे ॥
पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम् ।
यत्र जन्माष्टमीत्येव चातुर्मास्यमथापि वा ।
चातुर्मास्यव्रतारम्भं कुर्यात् कर्कटसंक्रमे ॥

महाभारते-

आषाढस्य सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतं कुर्यात् यत् किञ्चिन्नियतो नरः ॥

अयमर्थः- आषाढमासे शुक्लैकादश्यां वा कर्कटसंक्रान्तौ नियतनक्तभक्तेनायाचितेनोपवासेन वा नियतो व्रती चातुर्मास्यव्रतारम्भं कुर्यात् । तदुक्तं नारदेन-

एकभक्तेन नक्तेन तथैवायाचित्तेन च ।
कृते व्रते धराप्राप्तिर्जायते दीपमालिनी ॥

वराहे-

इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ॥
गृहीतेऽस्मिन् व्रते देव पञ्चत्वं यदि मे भवत् ।
तदा भवतु सम्पूर्णं त्वत् प्रसादात् जनार्दन ॥

ननु आषाढशुक्लैकादश्यादिषु व्रतोपक्रम मासं भवेत्तुलार्केऽपि आश्वयुजिशुक्लैकादश्यामपि गृह्णीयादिति कालादर्शकारः । तदुक्तं महाभारते-

वार्षिकान् चतुरोमासान् व्रतं किञ्चित् समाचरेत् ।
असम्भवे तुलार्के तु कर्त्तव्यं तत् प्रयत्नतः ॥

असम्भवे तुलार्केऽपि कर्त्तव्यम् ।

ननु व्रतारम्भसमये शुक्रास्तादिकालाशुद्धेऽपि चातुर्मास्य-व्रतारम्भं कुर्यात् । तदुक्तं महाभारते-

वार्षिकांश्चतुरोमासान् वाह्येति केनचिन्नरः ।
व्रतेन तेन नाप्नोति कल्मषं वत्सरोद्भवम् ॥

वराहपुराणे-

चातुर्मास्यव्रतं कुर्यात् नरः किञ्चिन्महीयते ।
नान्यथा त्वाब्दिकं पापं विनिहन्त्यप्रयत्नतः ॥

वृद्धगार्गेणोक्तम्-

न शैशवं न वा मौढ्यं गुरुशुक्रौ न वा तिथेः ।
खण्डत्वं चिन्तयेच्चातुर्मास्यव्रतविधौ नरः ॥
अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ।
उद्यापनमुपारम्भं व्रतानां नैव कारयेत् ॥

इति वृद्धगार्ग्यवचनविरोधात् कथं शुक्रगुर्वास्तमयादिषु न चातुर्मास्यव्रतारम्भः । उत्तरं विशेषवचनबलात् सामान्यवचनानामितर-विषयत्वानुसन्देह इति कालादर्शकारः । स्मृत्यन्तरे-

श्राद्धं जातकनामानि ये च संस्कारसव्रताः ।
मलिम्लुचेऽपि कर्त्तव्या इष्टं काम्यं च वर्जयेत् ॥

सव्रताः-चातुर्मास्यव्रतारम्भ इति माधवीकारः ।

यत्तु ज्योतिःशास्त्रे-

गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे ।
याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत् ॥

इति तद् विहितेतर विषयमिति ।

## अथ मार्गशिरोमासकृत्यम्

भारते-

मार्गशीर्षं तु यो मासम् एकभक्तेन संक्षिपेत् ।
भोजयेतु द्विजान् शक्त्या मुच्यते व्याधिक्लिविषैः ॥

## अथ पौषमासकृत्यम्

भारते-

पौषमासं तु कौन्तेय एकभक्तेन यः क्षिपेत् ।
सुभगो दर्शनीयश्च यशोभागी च जायते ॥

## अथ माघमासकृत्यम्

तत्र भारते-

माघन्तु नियतो मासमेकभक्तेन यः क्षिपेत् ।
श्रीमत्कुले जातिमांश्च सुमहांश्चैव जायते ॥

भविष्योत्तरे-

पौर्णमास्याममावास्यामारभ्य स्नानमाचरेत् ॥

महाभारते-

किञ्चिदभ्युदिते सूर्ये स्नानं माघे समाचरेत् ॥

कालादर्शे-

माघेष्वर्द्धोदिते सूर्ये स्नानं विधिवदाचरेत्

इति वचनाच्चान्द्रमासपरमेव । पद्मपुराणे-

मकरस्थे रवौ माघे गोविन्दाच्युत माधव ।
स्नानेनानेन देवेश यथोक्तफलदो भव ॥

भविष्योत्तरे-

त्रिंशद्दिनानि पुण्यानि मकरस्थे दिवाकरे ।

राजमार्त्तण्डे-

तुलामकरमेषेषु प्रातः स्नानं समाचरेत् ॥

महाभारतेऽपि-

तुलायां मकरे मेषे प्रातः स्नानं तिलैः सह ।
हविष्यं ब्रह्मचर्यञ्च महापातकनाशनम् ॥

पद्मपुराणे-

मकरस्थे रवौ माघे गोविन्दाच्युतमाधव ।
स्नानदानेन देवेश यथोक्तफलदो भव ॥
इति मन्त्रं समुच्चार्य स्नायात् मौनं समाश्रितः ।
वासुदेवं हरिं कृष्णं माधवञ्च हरेत् बुधः ॥

'मकरस्थे रवौ' इत्यादिवचनात् संक्रान्तिदिनमारभ्य स्नातव्यमिति गम्यते । एवं परस्परविरोधे सति उदितानुदितहोमवद् विकल्पः । अथवा पौर्णमासीमारभ्य स्नानमाचरेत् ।

अमावास्या परिच्छिन्नो मासः स्याद् ब्रह्मणस्य तु ।
संक्रान्तिपौर्णमासिभ्यां तथैव नृपवैश्ययोः ॥

इति वचनविशेषात् बाधविकल्पव्यवस्थानां परेवलीयांस इति न्यायादत्र व्यवस्थोपपत्तौ देशाचारादत्र व्यवस्था द्रष्टव्या ।

नारदीये-

सरितामप्यभावे तु नवकुम्भस्थितं जलम् ॥ इति ।

भविष्ये-

बालास्तरुणवृद्धा वा नरनारीनपुंसकाः ।
स्नात्वा माघं शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ॥
ब्रह्मक्षेत्रविशाञ्चैव मन्त्रवत् स्नानमिष्यते ।
तुष्णीमेव हि शूद्रस्य स्त्रीणाञ्च कुरुनन्दन ॥

मात्स्ये-तावत् षष्ठी सहस्राणि षष्ठीतीर्थागतानि च ।
माघमासे गमिष्यन्ति गङ्गायामनुसङ्गमे ॥
गवां शतसहस्रस्य सम्यग् दत्तस्य यत् फलम् ।
प्रयागे माघमासस्य त्र्यहस्नातस्य तत् फलम् ॥

एतेन काम्यस्नानं पुनर्न सर्वथा कृत्रिमादिजलेषु प्राप्तमिति कार्त्तिकमासकृत्ये निरूपितम् ।

## अथ फाल्गुनमासकृत्यम्

तत्र स्कान्दे-

एकभक्तन्तु कुर्वाणः फाल्गुने मासि नित्यशः ।
स्त्रीषु सौभाग्यमाप्नोति स्त्रियश्च परमप्रिया ॥

विष्णुः-

य इच्छेत् विपुलान् भोगान् सूर्यचन्द्रग्रहोपमान् ।
प्रातः स्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ॥

यमः- प्रातः स्नायी च सततं द्वौ मासौ माघफाल्गुनौ ॥

॥ इति स्मृतिसारसंग्रहे मासनिर्णयप्रकरणम् ॥

## अथ महाचैत्री

(अथेदानीं महाचैत्र्यादयो लिख्यन्ते)

तत्र शतानन्दसंग्रहे- चैत्री चेच्चित्रयुक्ता स्यात् तस्यां चित्रवस्त्रदानेन सौभाग्यमाप्नोति । चैत्री- चित्रानक्षत्रयुक्ता पौर्णमासी।

## अथ महावैशाखी

स्कन्दपुराणे-

मेषेऽर्के कार्मुके जीवे मकरस्थेऽथवा द्विजे ।
पूर्णिमा रविवारेण तुलास्थे तु शनैश्चरे ॥
वरीयोयुगयुक्ते तु विशाखार्क्षे यदा शशि ।
महाफला तदा ज्ञेया कोटिसूर्यग्रहाधिका ॥
कोटिजन्मकृतं पापं दृष्ट्वा श्रीपुरुषोत्तमम् ।
महावैशाख्यां मुञ्चन्ति स्नानं कृत्वा महोदधौ ॥

ननु यद्यपि मेषार्काभिधानन्तथापि भरण्यर्क एव योगोऽयं तत्रापि वरीयोयोगसम्भवादित्येके । अपरे तु यावद् वाचिक इति न्यायात् अश्विनी-भरणी-कृत्तिका-मघापदानामन्यतमार्के इन्द्रौ स्वातिविशाखा-नुराधामिश्रो वा योगः । अन्यथा मेषेऽर्के व्याप्तिर्न स्यादिति शतानन्दः ।

## अथ महाव्यतीपातयोगः

ज्योतिःशास्त्रे गार्ग्य-

पञ्चाननस्थौ गुरुभूमिपुत्रो, मेषे रविः स्यात् यदि शुक्लपक्षे ।
मासाभिधाना करभेण युक्ता महाव्यतीपात इतीह योगः ॥

पञ्चाननः- सिंहः । मासभिधा= द्वादशी, करभेण- हस्तानक्षत्रेण ।

अस्मिंस्तु गार्गभूमिहिरण्यवासाः दानेन सर्वं परिहाय पापम् ।
सुरत्वमिन्द्रत्वमनामयत्वं मर्त्त्याधिपत्यं लभते मनुष्यः ॥

विष्णुपुराणे-

श्राद्धार्थमागतं द्रव्यं विशिष्टमपि वा द्विजः ।
श्राद्धं विज्ञाय कुर्वीत व्यतीपातेऽयने तथा ॥

तथा शिवरहस्ये-

व्यतीपाते च वैधृतौ तत् कालव्यापिनी क्रिया ।

इति वचनादस्याः श्राद्धादिक्रियायाः यो विहितः स तत्कालव्यापिनी क्रिया कर्त्तव्या इत्यर्थः । अत्र गृही पिण्डरहितं श्राद्धं कुर्यात् । तदुक्तं विष्णुधर्मोत्तरे-

ग्रहणे च व्यतीपाते नवशस्यसमागमे ।
युगादौ षडशीत्याश्च गृहाच्छादन एव च ॥
नित्यश्राद्धे च संक्रान्त्यामपिण्डश्राद्धमिष्यते ॥

इदञ्च नित्यप्रमाणाभावात् काम्यम् ।

## अथ महाज्येष्ठी

तत्र शङ्करगीतायाम्-

ज्येष्ठायां गुरुचन्द्रौ च रोहिण्यां स्याद्दिवाकरः ।
पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्त्तिता ॥

गालवः-

वृषस्थऽर्के शशिगुरु वृश्चिके पूर्णिमा गुरौ ।
दिने महाफलयोगो महाज्येष्ठीति सोच्यते ॥
महाज्येष्ठ्यान्तु यो गच्छेच्छ्रीक्षेत्रं पुरुषोत्तमम् ।
व्रजेत् पदानि यावन्ति क्रतुतुल्यानि तानि तु ॥

तत्र गत्वा हरेर्धाम्नि दृष्ट्वा श्रीपुरुषोत्तमम् ।
विश्रम्य विधिवत् स्नायात् प्रतितीर्थेषु च क्रमात् ॥
दशपापहरादीनि सप्तैव च दिनानि च ।
यस्तिष्ठेत् सप्तवर्षाणि सप्तमन्वन्तराणि ॥
सप्तलोके वसेन् मर्त्यः स्वयंभूत्वाचतुर्भुजः ॥

प्राजापत्यव्रत इत्युपलक्षणात् । कृत्तिकारोहिणी मृगशिरसामान्यतम नक्षत्रगत इति ज्ञेयम् । तथा च गार्ग्यः-

प्राजापत्ये च सौम्यार्के ऐन्द्रे शशिगुरू तथा ।
ऐन्द्रे च पूर्णिमाज्येष्ठी महाज्येष्ठीति सोच्यते ॥
वृषे वा मिथुने भानौ जीवे चन्द्रे तथेन्द्रभे ।
पौर्णमासी गुरुवारे महाज्येष्ठी प्रकीर्त्तिता ॥

कालादर्शे-

ज्येष्ठायामिन्दुजीवौ च वृषे वा मिथुने रविः ।
पूर्णिमा गुरुवारेण महाज्येष्ठीति सा स्मृता ॥

गार्ग्यः-

योगैकेन विहीनेन मता देव प्रिया बुधैः ।
द्वाभ्यां भद्रेति विख्याता राकैव त्रिविधामता ॥

गालवश्च-

वृषभेर्के यत्र तत्र गुर्वीन्दू वृश्चिके तथा ।
गुरौ ज्येष्ठी महच्छब्दनाम्नीन्द्राग्नीस्थितैश्च तैः ॥

यात्रागतायां गुर्विन्दुभ्यां कृत्तिकागतेऽर्के महाज्येष्ठी स्यादित्यर्थः ॥

## अथ श्रवणाद्वादशी

तत्र नारदीये-

शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता ।
तयोरेवोपवासश्च त्रयोदश्यान्तु पारणम् ॥

मात्स्ये-

द्वादश्यां शुक्लपक्षस्य नक्षत्रं श्रवणं यदि ।
उपोष्य द्वादशीं तत्र हरिमभ्यर्च्चयेन्नरः ॥

विष्णुधर्मोत्तरे-

नभसः शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् ।
तस्यां तीर्थेषु यत्स्नानं तदनन्तं फलं लभेत् ॥
देवतापूजनं विप्रभोजनं श्राद्धमेव च ।
एकं जप्त्वा सहस्रस्य जपस्य फलमश्नुते ॥
स्नानञ्च महदल्पञ्च सहस्रगुणितं भवेत् ।
होमस्तत्रोपवासश्च सहस्रगुण उच्यते ॥

ननु यदा एकादश्युपवासश्चेत्युभयमेकस्मिन् दिने प्राप्नुति तस्योभयस्यान्योन्यविरोधाभावात् सहैवानुष्ठानं भविष्यति । यदात्वेकादश्यां पृथगुवासः सम्पूर्णत्वेन द्वादश्यां पृथक् तदोपवासद्वयं कर्त्तव्यम् । तदुक्तम् अनन्तभट्टीकारेण विष्णुधर्मे-

एकादशीमुपौष्येतत् द्वादशीं समुपोषयेत् ।
न चात्र व्रतलोपः स्याद् उभयोर्देवता हरिः ॥

नन्वेकं व्रतमसमाप्य व्रतान्तरमनुष्ठातुमशक्यम् असमाप्ते व्रते पूर्वेणैव कुर्यात् व्रतान्तरम् इति शास्त्रात् समाप्तिश्च विधिलोपं प्राप्नोति नैवम् । अद्भिः पारणं कृत्वा द्वितीयोपवासश्चोपवासानन्तरं शक्यत्वात् तादृशं परिमाणमशितानशितोभयात्मकं तत्राशितानशितत्वात् पूर्वोपवासः परिमापयति । अनशितरूपत्वेनोत्तरोपवासं न निन्दति । तथाह-

अशितानशिता यस्मात् तपोविन्दुभिरीरिताः ॥

इति स्मरणात् उदकपारेणेनोपवासद्वयं निर्वाह्य यदा उपवासद्वयाशक्त-स्तदा केवलद्वादश्युपवासेनोभ्ययोः फलं सिद्ध्यति । तदुक्तं माधवीये-

एवमेकादशी भुङ्क्त्वा द्वादशीं समुपोषयेत् ।
पूर्वोपवासजपुण्यं सर्वं प्राप्नोत्यसंशयम् ॥

अस्यार्थः- यदा द्वादश्यां श्रवणानक्षत्रं भवेत्तदा शुक्लैकादशीमपि परित्यज्य द्वादश्यामेवोपसेत् । वह्निपुराणे-

दशम्येकादशीमिश्रा नोपोष्या नरकप्रदा ।
श्रवणेन तु संयुक्ता सा शुभा सर्वकामदा ॥

श्रवणैकादश्यां वामनावतारः। भविष्योत्तरे-

निषिद्धमपि कर्त्तव्यं त्रयोदश्याञ्च पारणम्।
द्वादश्याञ्च निराहारो वामनं पूजयाम्यहम्॥
उदकुम्भे स्वर्णमयं त्रयोदश्याञ्च पारणम्।
आवाहयाम्यहं विष्णुं वामनं शङ्खचक्रिम्॥
सितवस्त्रयुगच्छन्ने घटे सच्छत्रपादुके।
स्नापयामि जलैः शुद्धैः विष्णुं पञ्चामृतादिभिः॥
छत्रदण्डधरं विष्णुं वामनञ्च नमोनमः।
अर्घ्यं ददामि देवेश अर्घ्यार्हाद्यैः सदार्चितः॥
भक्तिमुक्तिप्रदोनित्यं सर्वैश्वर्ययुतं कुरु।
वामनाय नमो गन्धो होमोऽन्नेनाष्टकं शतम्॥
ॐ नमो वासुदेवाय शिरः सम्पूजयेद्धरेः।
श्रीधरायमुखं ह्येतत् कण्ठं कृष्णाय वै नमः॥
नमः श्रीपतये वक्षो भुजौ सर्वास्त्रधारिणे।
व्यापकाय नमो नाभिं वामनाय नमः कटिम्॥
त्रैलोक्यजनकायेति मैत्र्यजङ्घे यजेद्धरेः।
सर्वाधिपतये पादौ विष्णोः सर्वात्मने नमः॥
धृतपक्वञ्च नैवेद्यं दद्याद्दध्योदनं घटम्।
रात्रौ जागरणं कृत्वा प्रातः स्नात्वा च सङ्गमे॥
गन्धपुष्पादिभिः पूजां दद्यात् पुष्पञ्जलिं तथा।
नमो नमस्ते गोविन्द वृद्धिश्रवणसंज्ञित॥
अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव।
प्रियतां देवदेवेशं मम नित्यं जनार्दन॥
वामनो बुद्धिदाता च द्रव्यस्थो वामनः स्वयम्।
वामनः प्रतिगृह्णाति वामनो मे ददाति च॥
द्रव्यस्थो वामनो नित्यं वामनाय नमो नमः।
प्रदाय दक्षिणान् विप्रान् सम्भोज्यान्नं स्वयं चरेत्॥

धूपदीपमन्त्रास्तु कूर्मपुराणादनुसरणीयाः। द्वादश्याञ्च निराहार इति

सङ्कल्पवाक्यम् ।चकाराद् द्वादश्यां निराहारो भवामि वेति समुच्चयार्थो न तु गृहीतैकादशीव्रतस्य एकादश्यामिन्द्रसूचकार्थः । एकादश्युपवासस्य श्रवणद्वादशी व्रताङ्गत्वाभावे सङ्कल्पवाक्ये तदुपादानस्यान्याय्यत्वात् । अत एव बह्निपुराणीय सङ्कल्पवाक्ये चकारो नास्त्येव । तद् यथा-

विधानं शृणु राजेन्द्र यथादिष्टं मनीषिभिः ।
यथोक्तं नियमं कुर्यादेकादश्यामुपोषितः ॥
दन्तकाष्ठं प्रगृह्यादौ वाग्यतो नियतेन्द्रियः ।
श्रवणद्वादशीयोगो समुपोष्य जनार्दनम् ॥
अर्च्चयित्वा विधानेन अहं भोक्षे परेऽहनि ।
नदीनां सङ्गमे स्नायात् पूजयेत्तत्र वामनम् ॥
सौवर्णं रत्नसंयुक्तं द्वादशाङ्गुलमुच्छितम् ॥

श्रवणद्वादशीयुगे तु, सङ्कल्पवाक्यम्-

श्रवणद्वादशी युगे सम्पूज्य गरुडध्वजम् ।
दत्वा दानं द्विजातिभ्यो वियोगे पारणं ततः ॥

वियोगे=श्रवणद्वादशी व्यपगमे ॥

## अथ विष्णुशृङ्खला

तत्र विष्णुधर्मोत्तरे-

एकादशी द्वादशी च वैष्णव्यमपि तत्र चेत् ।
तद्विष्णुशृङ्खला नाम विष्णुसायुज्यकृत् भवेत् ॥

मत्स्यपुराणे-

द्वादशी श्रवणर्क्षञ्च स्पृशेदेकादशीं यदि ।
स एव वैष्णवो नित्यं विष्णुशृङ्खलसंज्ञकः ॥
तस्मान्नुपोष्य विधिवन्नरः प्रक्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥

## अथ महाकार्त्तिकी

तत्र शतानन्दसंग्रहे रत्नावल्यां-

आग्नेयन्तु यदा ऋक्षं कार्त्तिकन्तु भवेत् क्वचित् ।

महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ॥

विष्णुपुराणे-

विशाखायां यदा सूर्यश्चरत्यंशं तृतीयकम् ।
तदा चन्द्रं विजानीयात् कृत्तिकाशिरसि स्थितम् ॥
कृत्तिकायां यदा चन्द्रः प्रथमांशे भवेत् क्वचित् ।
महती सा तिथिर्ज्ञेया स्नानदानेषु चोत्तमा ॥
यदा यस्यान्तु भवति तिथौ तस्यान्तु कुत्रचित् ।
सा महाकार्त्तिकी प्राक्ता देवानामपि दुर्लभा ॥
चन्द्रे चार्के गुरौ वापि वारेष्वेतेषु च त्रिषु ।
त्रिण्येतानि च ऋक्षाणि स्वयं प्रोक्तानि ब्रह्मणा ॥
अत्राश्वमेधिकं पुण्यं स्नानस्य तु भवेन्नृप ।
दानमक्षयतां याति पितृणां तर्पणं तथा ॥

## अथ रोहिणीप्रतिपत्

तत्राग्नेयपुराणे-

अनुमत्यामतीतायां प्रतिपद् रोहिणी यदि ।
तदा भवति संयोगः कार्त्तिकान्ते विशेषतः ॥
मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तेऽपि लभ्यते ।
रोहिणी प्रतिपच्चन्द्रे अर्घ्यदानं महाफलम् ॥
वृश्चिकस्थो यदा भानुः पक्षादौ च प्रजापतिः ।
कोटिसन्निहितं पुण्यं भौमे वा यदि वा रवौ ॥
तस्मिन् काले नृपश्रेष्ठ कुरु क्षेत्राधिकं फलम् ।
दशानामश्वमेधानां फलं प्राप्नोत्यसंशयम् ॥
एकं ज्ञात्वा विशषेण गन्तव्यं पुरुषोत्तमम् ।
कोटिसन्निहितं पुण्यं स्नात्वा चैव महोदधे ॥

तार्क्षपुराणे-

सरोहिण्यर्कचन्द्राय विष्णवे संश्रियै तथा ।
स्नानं करोमि देवेश व्रतं मे सफलं कुरु ॥
॥ इति स्नानमन्त्रः ॥

स्थण्डिलो रजतो वाऽपि पूज्यो विष्णुः सलक्ष्मीकः ।
विष्णुरूपशशाङ्कश्च लक्ष्मीरूपा च रोहिणी ॥
विष्णुं प्रजापतिं ध्यायेत् गायत्रीं रोहिणीं तथा ।
सोमेश्वराय सोमाय गोविन्दाय नमो नमः ॥
शशीश्चन्द्रः शशाङ्कस्तु ओषधीशो निशाकरः ।
हिमांशु सोम इत्यष्टौ प्रतिनामानि पूजयेत् ॥
रुक्मिणी चानिरुद्धश्च प्रद्युम्नो गरुडस्तथा ।
देवकी च यशोदा च पूजनीया द्विजातिभिः ॥

अष्टदलं पद्मं लिखित्वा अष्टदले पूर्वादितः शश्यादीनभ्यर्च्य पद्मं बहिस्तथैव बलभद्रं रोहिणीसहितं कृष्णं रुक्मिणी सहितं वसुदेवं देवकीमनिरूद्धश्च प्रद्युम्नं गरुडं यशोदाश्च पूर्वाद्यष्टदिक्षु पूजयित्वा कर्णिकायां च सोमाय सोमेश्वराय इति मन्त्रेण सोमरूपिणं गोविन्दमर्चयेत्।

सुगन्धैः कुसुमैः श्वेतैर्पुष्पैः धूपैः प्रदीपकैः ।
शालिदध्योदनबलिं मध्याह्ने घृतपायसैः ॥
समर्प्यब्राह्मणस्तद् व्रतं सायं सम्पूज्य सत्तमः ।
नमः सोमाय चन्द्राय ब्रह्मणे विष्णवे नमः ॥
सलक्ष्मीकाय देवाय जगत्यमृतरूपिणे ।
सरोहिणीक देवाय शशाङ्कायामृताय च ॥
रोहिण्यासहितो भूत्वा गृहाणार्घ्यं नमोऽस्तु ते ।
शङ्खे तोयं समादाय सपुष्पफलचन्दनम् ॥
जानुभ्यामवनीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ।
उपोषितव्यं भोक्तव्यं तैलक्षारविवर्जितम् ॥
शशाङ्काय समुद्दिश्य दद्याद्रजतदक्षिणाम् ॥

## अथ महोदध्यामावास्या

तत्र कूर्मे-

मार्गे मासि शिनीवाल्यां सागरे यत्र कुत्रचित् ।
स्नात्वाश्वमेधावभृथस्नानस्य लभते फलम् ॥

पितृणाऽक्षयकृते सतिलतर्पणम्-

ह्यविष्यमुष्टिशाकान्नैः श्राद्धकल्पैस्तथामृतैः ।
पूजयाम्यग्निकार्येण दानैश्च वाश्वमेधिकम् ॥
फलं प्राप्नोत्यसंदिग्धं तस्मादेतान् समाचरेत् ।
सागरस्योदकं पीत्वा प्रतिगण्डूषसंख्यया ॥
सोमपानसमं पुण्यं वरिणा हृदगतेन तु ।
भुङ्क्त्वा तस्यावशिष्टान्नं दत्वा तु पिण्डमात्रकम् ॥
तिष्ठेद् वर्षसहस्राणि प्रतिग्रासस्य संख्यया ।
सागरस्योत्तरे तीरे भूस्वर्गस्य च दक्षिणे ॥
पायसैर्घृतपूपैश्च दधिभक्तैर्विशेषतः ।
अन्नैः पवित्रभक्षैश्च श्राद्धं कृत्वा प्रपूज्य च ॥
बहूनां स्वर्णयज्ञानां कृतानां फलमाप्नुयात् ।
तथैवेन्द्रगतेभानौ षड्गुणात् षड्गुणं फलम् ॥
सोमवारे विशेषेण सायुज्यफलदा कुहुः ।
तस्यां मुख्यतमे क्षेत्रे देशे श्रीपुरुषोत्तमे ॥
तत्रोषसि समुत्थाय शुचिराचम्य वाग्यतः ।
मनसा केशवं ध्यायन् दक्षिणाभिमुखो व्रजेत् ॥
सागरे विधिवत् स्नात्वा पुराणपुरुषं स्मरेत् ।
पुनर्मौनं समाख्यायं केशवं चिन्तयन् व्रजेत् ॥
यत्रासौ तिष्ठते देवः पुराणपुरुषोत्तमः ॥
पुराणपुरुषेत्युक्त्वा स्फुटार्कमवलोक्य च ।
नमस्कृत्य ततो गच्छेत् प्रासाददूरदेशतः ॥
अवलोक्य ततो देवान् गोविन्दादीन् पुनः पुनः ।
प्रासादान्तं परिभ्रम्य पूर्ववत् प्रतिनामभिः ॥
प्रविश्य मन्दिरे रामं सुभद्रां मुरवैरिणम् ।
कृष्णञ्च पूर्ववत् जप्त्वा प्रणम्य च पुनः पुनः ॥
तथैवाभ्यर्च्य देवेशानवलोक्य तथैव च ।
सह विष्णुकथाभिश्च विष्णुर्विष्णुरिति जपेत् ॥

शिरस्यञ्जलिमादाय कुर्याद् वासो विसर्जनम् ।
मध्याह्ने च ततः कुर्यात् स्नानदानादिकाः क्रियाः ॥
पूजाहोमं तथा श्राद्धं अम्भः पानश्च भोजनम् ।
दशानामश्वमेधानां कृतं फलमवाप्नुयात् ॥
सागरस्य जलान्ते तु श्रीकृष्णस्य तु दक्षिणे ।
सर्वमक्षयमाप्नोति कृष्णमुद्दिश्यकर्मणः ॥
स्नानादिकश्च यत् कर्म सर्वं तत् सागराम्भसि ।
कर्त्तव्य उपवासस्तु पानीयपवनादृते ॥
महाज्येष्ठान्तु यत् पुण्यं हरिणा कूर्मरूपिणा ।
विरञ्चिना पुरा प्रोक्तं महाज्येष्ठी फलं यथा ॥
इदानीं त्वमहं वक्षे मार्कण्डेय तथा शृणु ॥

## अर्द्धोदयामावास्या

तत्र वायुपुराणे-

मृगेऽर्केन्दुक्षये पाते वारेऽर्के श्रवणा यदि ।
अर्द्धोदयः स विज्ञेयः सहस्रार्क गृहैः समम् ॥
अर्कोधृतिव्यतीपातैः युक्तः स पुष्यमाघयोः ।
अर्द्धोदयः स विज्ञेयः कोटिसन्निहितं फलम् ॥
तस्मिन् काले तु राजेन्द्र गन्तव्यं पुरुषोत्तमम् ।
सागरे विधिवत् स्नात्वा दृष्ट्वा नारायणं प्रभुम् ॥
कोटिजन्मार्जितं पापं नाशयेत्तत्क्षणाद्ध्रुवम् ।
स्नानं दानं तथा जाप्यमक्षयं फलभाग् भवेत् ॥

तथा च स्कन्दपुराणे- ईश्वर उवाच-

शृणु पुत्र प्रवक्ष्यामि सर्वपाप प्रणाशनम् ।
सर्वकार्यप्रदो नृणामुपायो निश्चितो मया ॥
माघे इन्दुक्षये पाते वारेऽर्के श्रवणा यदि ।
अर्द्धोदयः स विज्ञेयः सहस्रार्कग्रहैः समः ॥
तावत् गर्जन्ति पापानि सुबहूनि महान्त्यपि ।
यावन्नर्द्धोदयोभ्येति सर्वपाप प्रणाशनः ॥

आदित्यैर्लङ्घितो यस्मात् प्रकृताभ्युदयः शुभः ।
अर्द्धं हीनस्ततः सोऽयं चार्द्धोदय इति स्मृतः ॥
दिवैव योग सोऽयन्तु न तु रात्रौ षडानन ।
नान्यः पुण्यतमः कालो योऽर्द्धोदयसमो भवेत् ॥
अर्द्धोदये महापुण्ये सर्वं गङ्गासमं जलम् ।
तत्र दानानि देयानि भूदानप्रभृतीति च ॥
पापक्षयार्थिभिर्मर्त्तैः फलकाङ्क्षिभिः सुव्रतैः ।
तुलापुरुषवत्तत्र सदाशिवपुरं व्रजेत् ।
हिरण्यगर्भजो मर्त्यो गर्भवासं न वाप्नोयात् ॥

स्कन्द उवाच-

प्रायसो हि सदा मर्त्याः मन्दभाग्याः महेश्वर ।
अशक्ता भूमिदानादा मुच्यन्ते क्लिविषैः कथम् ॥
चतुषष्ठीफलं कांस्यं क्षेत्रं मित्रन्तु कारयेत् ।
चत्वांरिशत् फलं वापि फलं विंशतिरेव वा ॥
निधाय पायसं तत्र पद्ममष्टदलं लिखेत् ।
पद्मस्य कर्णिकायान्तु कर्षमात्रं सुवर्णकम् ॥
तदभावे तदर्द्धं वा तदर्द्धमपि निक्षिपेत् ।
वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत् ॥
सुवर्णमहमन्नं हि ब्रह्मा मन्त्रो जनार्दनः ।
तस्मात्तत्र त्रयं विद्वन् त्रयीमयमभेदतः ॥
सुवर्णं पायसं पात्रं तस्मादेतत् त्रयीमयम् ।
आवयोः साध्विदं तस्मात्तद् गृहाण द्विजोत्तम ॥
इत्युचार्य द्विजं भक्त्या नमस्कृत्य समापयेत् ।
एवं यः कुरुते दानमर्द्धोदयमहातिथौ ॥
सर्वान् कामानवाप्नोति कार्त्तिकेय न संशयः ।
गोचर्ममात्रं यां भूमिं दद्यादर्द्धोदये तिथौ ॥
तदभावे यथाशक्ति यो ददाति वसुन्धराम् ।
स चक्रवर्त्ती भवति प्रसादान्मम षण्मुख ॥

अर्द्धोदये गां बहुदुग्धदोग्ध्रीं सवस्त्रवत्साञ्च यथोक्तदक्षिणाम् ।
अलङ्कृताय द्विजपुङ्गवाय दत्वेति पाशं मम पापमुक्तम् ॥
अधोगतिगतान् सर्वान्नुद्धरेदखिलान् पितृन् ।
तिलपात्रप्रदानेन अर्द्धोदये तिथौ नरः ॥
अद्धोदये यानसुवर्णवस्त्रं गोदानमत्र द्विजपुङ्गवेभ्यः ।
अजत्वमिन्द्रत्वमनामयत्वं मर्त्याधिपत्यं लभते मनुष्यः ॥
एतत्ते कथितं पुत्र प्रीत्या गुह्यतमं मया ।
श्रुतं पापहरं पुंसां किं भूयः श्रोतुमिच्छसि ॥

ननु यथा चन्द्रसूर्यपरागे सर्वं भूमि समं दानमिति वचनादत्रापि कालविशेषत्वेन भूमिदानप्रधानाद् भूमेरसम्भवे भूमिसमं सुवर्णं दद्यात्। तदुक्तं कालादर्शे-

दद्यात् भूमिञ्च विप्रेभ्यो पात्रेभ्यो ब्राह्मणो यथा ।
तत् समं वा सुवर्णादिस्पर्शकालः प्रशस्यते ॥

गोचर्मपरिमाणन्तु दानसागरे मार्कण्डेयपुराणे-

दशहस्तेन वंशेन दशवंशान् समन्ततः ।
पञ्चाशद्भ्योऽधिकं दद्यात् एतत् गोचर्म चोच्यते ॥
ताम्रपात्रतिलैः पूर्णं प्रस्थं पात्रे द्विजातये ।
स हिरण्यान्तु गां दद्यात् श्रद्धावित्तानुसारतः ॥
सर्वपापविशुद्धात्मा लभते तु परां गतिम् ।
ताम्रपात्रं दशपलं जघन्यं परिकीर्त्तितम् ॥
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं चोत्तमं स्मृतम् ।
स्वर्णमेकं जघन्यन्तु द्विगुणं मध्यमं भवेत् ॥
त्रिगुणं चोत्तमं तद्वत् सुवर्णदक्षिणोच्यते ।
देयद्रव्यं तृतीयांशं दक्षिणां परिकल्पयेत् ॥
अनुक्तदक्षिणादाने दशाशं वाऽपि शक्तितः ।
सुवर्णे दीयमाने तु रजतं दक्षिणोच्यते ॥
अन्येषामपि दानानां सुवर्णं दक्षिणा स्मृतम् ।
सुवर्णं रजतं ताम्रं तण्डुलं धान्यमेव वा ॥

अर्द्धोदयममावास्यां तीर्थस्नानं कराम्यहम् ।
पापं नाशय मे देव कालरूपी जनार्दन ॥
॥ इति स्नानमन्त्रः ॥

प्रार्थना-अर्द्धोदयतिथौ देव यन्मया दुष्कृतं कृतम् ।
तत्सर्वं नश्य मे देव विश्वरूप नमोऽस्तुते ॥

## अथ महामाघी

तत्र वायुपुराणे-

मेषपृष्ठे यदा सौरिः सिंहे गुरुश्च चन्द्रमाः ।
भास्करः श्रवणामध्ये महामाघीति सा स्मृता ॥

राजमार्त्तण्डे-

पौर्णमास्योद्भवं त्वन्य काम्यं नक्षत्रयोगतः ।
माघ एव तु मासः स्यात् मकरस्थे दिवाकरे ॥

## अथ पापनाशिनी एकादशी

तत्र ब्रह्माण्डपुराणे-

पुनर्वसो देवगुरौ निशाकरे, निशेशवारेऽमरपूज्यकेऽथवा ।
कुम्भे रवौ मत्स्यगते बृहस्पतौ एकादशी स्यात्खलु पापनाशिनी।
जप्यश्च तप्यश्च तपोऽर्जितं हुतं
यत् किञ्चिदस्यां किल धर्म सञ्चितम् ।
अनन्तपुराणि भवन्ति तस्य
सूर्यग्रहात् किमधिकं फलं तदा ॥
क्षीरोदके वाह्यवगाह्य यो नरः
संपूज्य कृष्णं रजनीमुपोषिताम् ।
एतेन पापं उशजन्मनि कृतम्
विनाशयेत्तस्य समग्रमाशु तत् ॥

निशेशवारे= चन्द्रवारे, कुम्भे रवौ- सौरफाल्गुने, मत्स्यगते= मीनगते, कर्कटगते इति केचित् । वायुपुराणे-

कुम्भो वा यदि वा मीने फाल्गुन्यैकादशी सिता ।
पुष्यर्क्षं गुरुसंयुक्ता महापापप्रणाशिनी ॥

वराहपुराणे-

एकादश्यां सिते पक्षे पुष्यर्क्षं यत्र सत्तमः ।
तिथौ भवति सा प्रोक्ता विष्णुना पापनाशिनी ॥
तस्यामाराध्य गोविन्द जगतामीश्वरं परम् ।
सप्तजन्मकृतात् पापात् मुच्यते नात्रसंशयः ॥
यश्चोपवासं कुरुते तिथौ तस्यां द्विजोत्तमः ।
सर्वपापविनिर्मुक्तः विष्णुलोकं स गच्छति ॥
दानं यद्दीयते किञ्चित् समुद्दिश्य जनार्दनम् ।
होमो वा क्रियते तस्यामक्षयं कथितं फलम् ॥

## अथ गोविन्दद्वादशी

तार्क्ष्यपुराणे-

फाल्गुनस्यामले पक्षे कुम्भस्थे दिवसाधिये ।
जीवे धनुसि योगश्च शोभनो रविवासरः ॥
यदि पुष्यर्क्षसंयुक्ता गोविन्दद्वादशी स्मृता ।
गोविन्दद्वादशीं प्राप्य गच्छेत् श्रीपुरुषोत्तमम् ॥
व्रतमापूर्य तत्रैव विष्णुसायुज्यमाप्नुयात् ।
महाज्येष्ठ्याद्दशगुणं फलं प्राप्नोति मानवः ॥

ब्रह्माण्डपुराणे-

कुम्भस्थे मास्करे राजन् चापे जीवो यदा भवेत् ।
द्वादशी शुक्लपक्षे च पुष्यर्क्षे जायते क्वचित् ॥
तिथिरेषा महापुण्या ब्रह्मणा परिकीर्त्तिता ।
गोविन्दद्वादशी नाम महापातकनाशिनी ॥
तस्यां कृतोदधिस्नानं दृष्ट्वा च पुरुषोत्तमम् ।
यत् फलं प्राप्यते सम्यक् शृणुष्वाबहितो नृप ॥
शतशो निहितां गङ्गामवगाह्य विधानतः ।
त्रयोदश्यां महाज्येष्ठ्यां फलं प्राप्नोति मानवः ॥

तस्यां महोदधिस्नानं विष्णुधर्मोत्तरे-

फाल्गुनामलपक्षस्य पुष्यर्क्षे द्वादशी यदि ।

गोविन्दद्वादशी नाम महापातकनाशिनी ।।
तस्यामुपोष्य विधिवन्नरः स्यात् क्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ।।

तार्क्ष्यपुराणे-

पञ्चम्यामेकभक्तश्च नियतात्मापरेऽनि ।
पञ्चतीर्थे नरः स्नात्वा एकादश्यामभोजनम् ।।
ततः प्रभाते विमले दुर्लभे पुरुषोत्तमे ।
द्वादशीयुगयुक्तेयं महापातकनाशिनी ।।
पञ्चतीर्थं पुनः गत्वा पूजां च मण्डले हरेः ।
मण्डलं कारयेत् तत्र सर्वतो भद्रसंज्ञकम् ।।
भूतशुद्धिं ततः कुर्यादुपन्यासव्रते व्रती ।
पीठपूजादिकं कृत्वा पूजयेदञ्जलित्रयम् ।
गोविन्देति समुच्चार्य पुरुषसूक्तक्रमेण वा ।।
गन्धपुष्पादिनैवेद्यैः पूज्यैर्नानाविधैरपि ।
समभ्यच्चर्य जपेन् मन्त्रं तत्वं गोविन्दशाब्दितम् ।।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तथा ।
अष्टाविंशतिकं वापि जपेन् मन्त्रं समाहितः ।।
प्रदक्षिणं ततः कुर्यात् प्रणमेद्दण्डवत् भुवि ।
कृताञ्जलिपुटो भूत्वा इमं मन्त्रमुदीरयेत् ।।
नमो ब्रह्मण्यदेवाय श्रीधरायाव्ययात्मने ।
ऋग्यजुःसामरूपाख्यगोविन्दाय नमोनमः ।।
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ।।
कृष्णस्य मुखमालोक्य होमं कृत्वा यथाविधि ।
आज्यं संस्कृत्य विधिवद् जुहुयात् षोडशाहुतीः ।।
पुरुषसूक्तेन मन्त्रेण सर्वपापापनुत्तये ।
धान्यञ्च तिलसंयुक्तं व्याहृत्येकादशाहुतीः ।।
पुनराज्येन जुहुयात् सहस्रं शतमेव वा ।

मूलमन्त्रेण मेधावी वाग्यतः पापशुद्धये ॥
पूर्णाहुतिं ततो दद्यात् हुत्वास्विष्टकृतं पुरा ।
जुहुयान्मूलमन्त्रेण धृतेनैवाहुतित्रयम् ॥
दक्षिणाञ्च ततो दद्यात् वित्तशाठ्यविवर्जितः ।
गो-भू-हिरण्यवासांसि ब्राह्मणेभ्यो विमत्सरः ॥
प्रातःकाले तु सम्प्राप्ते त्रयोदश्यां तथा भवेत् ।
ब्राह्मणान् भोजयेत्तत्र दीनान्धवधीरानपि ॥
य इमं कुरुते योगं क्षेत्रे श्रीपुरुषोत्तमे ।
स याति परमं स्थानं तत्र देवं निरञ्जनम् ॥
बालवृद्धातुरा कन्या ये समर्था उपोषिताः ।
हविष्यपारणं कुर्यात् विष्णुपूजनतत्परः ।
अक्ष्णोर्यन्मङ्गलं प्राप्य विष्णुलोकं व्रजन्ति ते ॥
यत्र यत्र हरेः स्थाने यः कुर्यात् व्रतमीद्धराम् ।
सविष्णुः स्थानमासाद्य भुङ्क्ते भोगान्नशेषतः ॥
पुनर्ब्राह्मणमासाद्य जातो जातिस्मरी भवेत् ।
वैष्णवयोगमासाद्य कैवल्यं लभते तु यः ॥

राजमार्त्तण्डे-

संयोगो द्वादशी पुष्ये कुम्भस्थे चापि भास्करे ।
महापुण्यतमः कालः पूज्याः ब्रह्महरीश्वराः ॥
कुम्भे तिग्ममयूरमालिनी निशानाथोपगूढे गुरौ ।
द्वादश्यां विधिवद् विधाय विविधां पूजां हरेः श्रद्धया ॥
पूतं प्राश्य हविष्यमच्युतकथा शृण्वन् व्यपोहत्यथ ।
द्वादश्यां विधिरेष पुष्यविगमे कार्यो बुधौ श्रद्धया ॥
द्वादश्यां शुक्लपक्षे शशिनि शुभयुते कुम्भसंस्थे खरांशौ ।
पूजां कृत्वा मुरारेर्विधिविहितहविः प्राशयेन्मन्त्रपूतम् ॥
पुष्या ऋक्षं न च स्यात् तदपि विधिममुं वासुदेवस्य कृत्स्नम् ।
द्वादश्यामेव कुर्यान्नहि भवति विधिर्द्वादशीमन्तरेण ॥

इति स्मृतिसारसंग्रहेऽलभ्ययोग प्रकरणम् ।

## अथ अष्टकाश्राद्धम्

तत्र विष्णुधर्मोत्तरे- आग्रहाण्यां त्रिस्रोष्टकाः । शौनकसूत्रे च हेमन्तशिशिरयोस्तूरीयपरिणानामपरपक्षाणामष्टम्यामष्टकाः ।

स्मृत्यन्तरे-

संक्रान्तौ भास्करे कन्यां कृष्णपक्षे विशेषतः ।
अष्टम्यामष्टकानाञ्च शाकेनापि च हापयेत् ॥

वस्तुतः न इष्टका इति प्रसिद्धिः, विष्णुः- अमावास्यातिस्रोष्टकास्तिस्रोन्वष्टकाः माघी पौष्ठपद्यूर्ध्वं कृष्णात्रयोदशी ब्रिहीयवपाकौ च ।

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥

दोषश्रवणात् अष्टकादिश्राद्धं शूद्रादीनामप्याधिकारः । तथा च मत्स्यपुराणे-

अमावास्याष्टकाकृष्णपक्षे पञ्चदशीषु च ॥

इत्यष्टकाश्राद्धमभिधेयोक्तम् ।

एतच्चानुपनीतोऽपि कुर्यात् सर्वेषु पर्वसु ।
श्राद्धं साधारणं नाम सर्वकामफलप्रदम् ॥
भार्याभिरहितोऽप्येतत् प्रवासस्थापिनित्यशः ।
शूद्रोप्यमन्त्रवत् कुर्यात् अनेन विधिना बुधः[७१]॥

इत्येतत् शब्दात् प्रकृतसर्वश्राद्धप्रतीत इति ।

## अथ अन्वष्टकाश्राद्धम्

तत्र विष्णुधर्मोत्तरे-

आग्रहाण्या ऊर्ध्वं तिस्रोऽन्वष्टका इति ।

पितरि मृतेऽप्यमावास्यायां वाऽधिकारो नित्यश्राद्धे तुल्यतयाविधानात्। 'श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते' इति दोषश्रवणादन्वष्टकासु मातरि जीवन्त्यां मातरं त्वक्त्वा जीवन्तं दद्यादिति कात्यायन वचनात् श्राद्धः

---

७१. अष्टकेति- मार्गशीर्षे च पौषे च माघे प्राप्ते च फाल्गुने कृष्णपक्षे च पूर्वेद्युरन्वयं तथाष्टका ॥ इति निर्णयसिन्धुधृत कालादर्शवाक्यमिति । नि. सि. पृ- ४२२ । ऊर्ध्वमाग्रह्यण्यास्तिस्त्रोष्ठकाः । पा.गृ.सू. ३/२/१ । अष्टका देवता ।

क्रियत एव । तथा च कात्यायनः-

अन्वष्टकासु वृद्धौ च गयायाञ्च मृतेऽहनि ।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥

'अन्यत्र पतिना सह' इति वचनात् अत्र शातातपः-

सपिण्डीकरणादूर्ध्वं यत् पितृभ्यः प्रदीयते ।
सर्वेषां सह तन्मात्रा सर्वशास्त्रेषु निश्चयः ॥

अन्वष्टकाश्राद्धं तु मातृपूर्वकमेव कर्त्तव्यम् । तदुक्तं ब्रह्मपुराणे-

अन्वष्टकासु क्रमशो मातृपूर्वं तदिष्यते ॥

अथवा- आमन्त्रकाणां मन्त्रे वा देय इति वचनात् केचित् अन्ते कुर्वन्ति तदुक्तं विद्याकरपद्धतौ-

मातामहानां यः कृत्वा मातृणां संप्रयच्छति ।
तर्पणं पिण्डदानञ्च नरकं चैव गच्छति ॥

इति दोषश्रवणात् मध्ये केचित् कुर्वन्ति । तदुक्तं शाखाध्यायिनः-

अष्टकास्वनेकास्वनग्निः श्राद्धं गमिष्यति ।
देवेभ्यश्च पितृभ्यश्च मातृभ्यश्च तथाक्रमम् ॥

इत्येवंविध परस्परविरोधदर्शनात् [७२]उदितानुदितहोमविधेर्विकल्पः । मातृश्राद्धन्तु छान्दोगैर्न कर्त्तव्यम् । मातामहादिश्राद्धञ्चेति श्राद्धविवेकः।

य योषिद्भ्यः पृथक् दद्यादवसानादिनादृते ।
कर्षू समन्वितं मुक्त्वा यथाद्यं श्राद्धशोडशम् ॥

प्रत्याद्विकञ्च शेषेषु पिण्डाः स्युः पञ्चभिः स्थिता । इति छान्दोगपरि-
शिष्टवचनविरोधात् कर्षू समन्वितं सपीण्डकरणं श्राद्धम् ।

## अथ योगाद्याः

तत्र ब्रह्माण्डपुराणे-

वैशाखे शुक्लपक्षे च तृतीयायां कृतं युगम् ।

---

७२. उदयात्पूर्वमरुणकिरणवान् प्रविरलतारकोऽनुदितकालः । परस्परविरुद्धकाल-श्रवणेऽपि सर्वथा विकल्पेनाग्निहोत्रहोमः प्रवर्त्तते । देवतोद्देशेन द्रव्यत्यागगुणयोगाद्यज्ञशब्दोऽत्र होमे गौणः 'उदिते होतव्यम्' (ऐ.ब्रा. ५/१९) इत्यादिका वैदिकीश्रुतिः । कुल्लूक मनु.स्मृ. २/१५ ।

कार्त्तिके शुक्लपक्षे च त्रेता च नवमेऽहनि ॥

तथा भाद्रपदे कृष्णत्रयोदश्यान्तु द्वापरः ।

माघस्य पौर्णमास्यान्तु घोरं कलियुगं तथा ॥

यत्तु अमावास्या माघस्येति ब्रह्मपुराणवचनं तत् कल्पभेदेन बोधव्यम्। 'युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते' । विष्णुपुराणे-

वैशाखमासस्य सिता तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे ।

नभस्य मासस्य तमिश्रपक्षे त्रयोदशी पञ्चदशी च माघे ॥

एताः युगाद्याः कथिताः पुराणे अनन्तपुण्यास्तिथयश्चतस्रः ।

पानीयमप्यत्र तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥

श्राद्धकृतं तेन समासहस्रं ।

रहस्यमेतत् पितरो वदन्ति ॥

[७३]मन्वादौ च [७४]युगादौ च ग्रहणे चन्द्रसूर्ययोः ।

[७५]व्यतीपाते च वैध्नतौ तत्कालव्यापिनी क्रिया ॥

---

७३. मन्वादाविति-

अश्वयुक् शुक्लनवमी कार्त्तिकीद्वादशी सिता ।

तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥

फाल्गुनस्याप्यमावास्या पौषस्यैकादशीसिता ।

आषाढस्यापि दशमो माघमासस्य सप्तमी ॥

श्रावण्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा ।

कार्त्तिकी फाल्गुनी ज्यैष्ठी चैत्री पञ्चदशीति च ॥ -कालसारः पृ.- ३०८

७४. युगादाविति-

वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम् ।

कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥

तथा भाद्रपदे कृष्णत्रयोदश्यां च द्वापरम् ।

माघे तु पौर्णमास्यां च घोरं कलियुगं स्मृतम् ॥

युगारम्भास्तु तिथयो युगाद्याः तेन विश्रुतः ॥

-इति कालसारोद्धृत ब्राह्मवचनम्. पृ. ३४८ ।

७५. व्यतिपातः-

श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके ।

एषु कर्म प्रकुर्वीत शतमष्टगुणं भवेत् ॥

तस्याः श्राद्धादिक्रियायाः यो विहितः कालः स तत् कालः । तस्य व्यापिनी श्राद्धादिकर्त्तव्या इत्यर्थः ।

अभ्यङ्गे चोदधिस्थाने दन्तधावनमैथुने ।
ताते च निधने चैव तत्कालव्यापिनी क्रिया ॥

स्कन्दपुराणे-

पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ॥

अत्र गृहिभिः पिण्डरहितं श्राद्धं कर्त्तव्यम् । इत्यक्षयतृतीयाप्रकरणे निरूपित इत्यर्थः ।

## अथ मन्वन्तरम्

तत्र मत्स्यपुराणे-

तथा मन्वन्तरादौ च श्राद्धं देयं विधानतः ।

तथा- मन्वाद्यासु युगाद्यासु प्रवर्त्तस्य तिलाञ्जलिः ।
सहस्रवार्षिकां तृप्तिं पितृणामावहेत् पुरा ॥

तथा- अश्वयुक् शुक्लनवमी द्वादशी कार्त्तिके तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी तथा माघस्य सप्तमी ॥
नभसस्याष्टमी कृष्णा तथाषाढीय पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयस्त्वेताः दत्तस्याक्षयकारकाः ॥

अमावास्याष्टमीत्यादिरिक्ताद्वादशतिथयः शुक्लाप्रतिपद् गृहीतव्याः । पुनः तथा प्रदोषदानात् उपक्रमोपसंहारयोः शुक्लकीर्त्तनाच्चेति । ननु बृद्धगार्ग्येण तथा प्रोक्तम्-

आश्वयुक् शुक्लनवमी द्वादशी कार्त्तिके सिता ।
तृतीया चैत्रमासस्य ज्येष्ठे पञ्चदशी सिता ॥

---

यद्यमारविवारेण व्यतीपातः स उच्यते ॥

इति कृत्यकल्पतरुश्राद्धकाण्डटिप्पण्यामुद्धूत बृद्धमनुवाक्यमिति - पृ.- १।

सप्तमी माधमासस्य पुषस्यामा तथा परा ।
वृश्चिके चाष्टमी कृष्णा मकरे द्वादशी सिता ॥
गोविन्दद्वादशी कुम्भे मेषे पञ्चदशी सिता ।
कार्त्तिकी फाल्गुन्याषाढी पूर्णिमा द्वादशी सिता ॥

एतेन नित्यत्वे प्रमाणाभावात् काम्यता । अगत्यादित्यक्षयात्पितृप्रीति फला इति ।

## अथाकामावै

तत्र भारते-

आकामावैषु यत् श्राद्धं यच्च दानं यथाविधि ।
उपवासादिकं यच्च तदनन्तर्फलं स्मृतम् ॥
आषाढी कार्त्तिकी माघी वैशाखीषु कृतश्च यत् ।
तदनन्तर्फलं प्राप्य स्नानदानजपादिकम् ॥

स्नानदानादिकं चोभयव्यापिनीतिथौ कर्त्तव्यम् ।

यां तिथिं समनुप्राप्य उदयं यातिभास्करः ।
सा तिथि सकलाज्ञेया स्नानदानजपादिषु ॥

सकलपुराणाभावात् काम्य इति ।

## अथापरपक्षनिर्णयः

तदाह जातुकर्ण्यः-

आषाढीमवधिं कृत्वा यः स्यात् पक्षस्तु पञ्चमः ।
सविज्ञेयो श्राद्धकालः कन्यां गच्छतु वा न वा ॥

नागरखण्डे-

नभो वाऽथ नभस्यो वा मलमासो यदा भवेत् ।
सपक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते[७६] ॥

ननु पञ्चमपक्ष एव शक्रध्वज निपातस्योक्तत्वात् । तदाह जातुकर्ण्यः-

शक्रध्वजनिपाताङ्गो यः स्यात् पक्षस्तु पञ्चमः ।
स विज्ञेयोऽपरपक्षः तत्र श्राद्धं विधीयते ॥

---

७६. सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः इति समयप्रकाशः- पृ.- १६७ ।

बृहन्मनुः-

मध्ये वा यदि वाप्यन्ते तत्र कन्यां रविर्व्रजेत् ।

स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते ॥

कात्यायनः-

श्रद्धान्तिं श्राद्धं कुर्वीत शाकेनापि नापरपक्षं

नाक्रमेन्मासिवोशनमिति श्रुतेः ॥

ब्रह्मपुराणे-

अश्वयुक् शुक्लपक्षस्य श्राद्धं कुर्यात् दिने दिने ।

त्रिभागहीनपक्षं वा त्रिभागं बृद्धिमेव वां ॥

दिने दिने सकल एव पक्षेत्यर्थः । विभागहीने पञ्चमपक्षादि । अर्द्धपक्षे अष्टम्यादि । पक्षसार्द्धं पक्षार्द्धमिति कल्पतरुकारप्रभृतयः । अर्द्धत्रिभागस्य दिनत्रयं क्रमेणापचितकल्पानुसारम् इति श्राद्धविवेक-समयप्रकाश-संवत्सरप्रदीपकाराः ।

अत्र पक्षचतुष्टयाम्नानात् कृते कृतं शास्त्रार्थं इति न्यायात् सकृदेव श्राद्धमिति समयप्रकाशोऽत्यन्ताशक्तेः पञ्चमी प्रभृति यस्यां कस्याञ्चित्तिथौ श्राद्धमिति धवलाचार्यः तथा च नागरखण्डे-

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।

यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे ॥

तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो धृवम् ॥

ब्रह्मपुराणे-

यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।

तावत् श्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तथा ॥

भविष्यपुराणे-

कन्यां गते सवितरि पितृराजानुशासनात् ।

तावत् प्रेतपुरी शून्या यावद् वृश्चिकदर्शनम् ॥

ततो वृश्चिकमायाते निराशाः पितरो नृप ।

पुनः स्वभुवनं यान्ति शापं दत्त्वा सुदारुणम् ॥

अपुत्राश्चैव पशवो लोके भवति निन्दितः ।

रौरवे नरके घोरे यदातुरस्तु संप्लवम् ॥
हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।
पञ्चम्यामुत्तरे दद्यादुभयोर्वंशयोर्ऋणम्[७७] ॥
सूर्ये कन्यास्थिते श्राद्धं यो न कुर्याद्गृहाश्रमी ।
कृतस्तस्य धनं प्राणाः पितृनिश्वासपीडनात् ॥

यस्य निमित्तात् कन्यागतापरपक्षे श्राद्धमन्तं सम्पन्नं तं प्रतिपत् तुलास्थ सविता तावत् श्राद्धकाल इति कल्पतरुकारः[७८] । क्रमादिति वचनान्मुख्यकल्पानुकल्पेनेति श्राद्धविवेकः ।

तथा च भविष्ये-

येयं द्विपान्विता राजन् ख्याता पञ्चदशी भुवि ।
अस्यां दद्यात् न चेद्दत्तं पितृणां वै महालये[७९] ॥

महालये कन्यागतापरपक्षे । तस्यामिति प्राधान्येन । अमावास्या निर्देशः, एतच्चामावास्याप्रशंसापरं नान्यतिथि निषेधपरम् । कार्त्तिकं संकलं व्यापीति विष्णुवचनात्तुला कृष्णपक्षे यस्यां कस्याञ्चित्तिथौ श्राद्धं कर्त्तव्यम् । अन्यत्रापि । यावत् कन्यातुलयोरिति ब्रह्मपुराणवचनेन सकलकृष्णपक्षाद्दशम्यादिसंवत्सरप्रदीपकारः । ननु आश्विने अधिमासप्राप्ते प्रौष्ठपद्यूर्ध्वपक्षस्य सिंहगतत्वात् कुत्र श्राद्धं, किं कन्यागते मलमासेऽन्यत्र चेत् वाकाङ्क्षयां पितामह-

मास कन्यागते भानावसंक्रान्तो भवेद् यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्त्तुरक्षयम् ॥

गृह्यपरिशिष्टे-

महालयाष्टकाश्राद्धमुपाकर्माद्यपि च यत् ।
साष्टमासविशेषाख्या विहितं वर्जयेन्मले ॥

---

७७. पञ्चम्योरन्तरे कुर्यादुभयोरपि पक्षयोरिति समयप्रकाशे- पृ.- १७० ।

७८. 'तावच्छ्राद्धस्य काल' इति यस्य कृतश्चिन्निमित्तात् कन्यागतापरपक्षे श्राद्धं न निष्पन्नम्, तं प्रतियावत्तुलास्थः सविता तावत् श्राद्धकालो विहित इत्यर्थः ॥ इति कृ.क.श्रा.का.- पृ- १७

७९. तस्यां दद्यान्न चेद्दत्तं पितृणां वै महालये इति स.प्र.- पृ.-१७१ ।

भृगुरुवाच-

वृद्धिश्राद्धं तथा सोममन्वाधेयं महालयम् ।
शय्याभिषेककाम्यञ्च न कुर्यात् भानुलङ्घिते ॥

अधुना वर्ज्यमाह- तत्र गार्ग्यः-

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
एषु श्राद्धं न कुर्वीत गृहीपुत्रधनञ्जयात् ॥

ज्योतिःशास्त्रे-

प्रतिपद्यथषष्ठीं शक्रपाते च रौद्रे
भृगुसुतमघऋक्षे जन्मभे निर्धने च ।
त्रिदशतिथित्रिपादे चाष्टमस्थे शशाङ्के
धनुसुतपशुदारान् पिण्डदाने निहन्ति ॥

एतच्च सकृद्विषयम्- तथा च कालादर्शे-

नभस्यस्यापरे पक्षे श्राद्धं कार्यं दिने दिने ।
नैव नन्दादिकं वर्ज्यं नैव वर्ज्या चतुर्दशी ॥

मनुः- कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः ॥

याज्ञवल्क्यः-

प्रतिपत् प्रभृतिष्वेका वर्जयित्वा चतुर्दशीम् ।

ननु पक्षश्राद्धं संकल्प्य त्रयोदश्यादिषु पिण्डदाने न निषेधः । सङ्कल्पभङ्गात्। तथा च मार्कण्डेयः-

पक्षश्राद्धे त्रयोदश्यां सपिण्डं श्राद्धमिष्यते ।
सङ्कल्पस्य वशादेव मघायां चैव तत्तथा ॥
सङ्कल्पनाशं कुर्वीत सङ्कल्प्य यदि शक्तिमान् ।
पितृभिर्नरकं यायादेकविंशतिमेव सः ॥

ब्रह्माण्डपुराणे-

कन्यागते सवितरि यान्यहनि तु षोडश ।
क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ॥

काम्यमिदं नित्यप्रमाणाभावात् फलश्रुतेश्च । तथा च ब्रह्माण्डपुराणे-

राजसूयाश्वमेधानां यदीच्छेत् सदृशं फलम् ।
अप्यम्बु शाकमूलाद्यैः पितॄन् कन्यागतेऽर्च्चयेत् ॥

## अथ काम्यतिथिश्राद्धकालाः

तत्रापस्तम्बः- प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्ये जायते । द्वितीयस्तेनाः । तृतीये ब्रह्मचर्च्चासिनः । चतुर्थे क्षुद्रपशुमान् । पञ्चमेपुमांसो बह्वपत्योनचानपत्यः । प्रमीयते । षष्ठेऽध्वशीलो अक्षशीलश्च । सप्तमे कर्षेराद्धिः । अष्टमे पुष्टिः । नवमे एकखुराः दशमे व्यवहारे रुद्धिः । एकादशे कृष्णोयसंत्रपसितम् । द्वादशे पशुमान् । त्रयोदशे बहुपुत्रो बहुमित्रोदर्शनीयापत्योयुवमारिणंस्तु भवन्ति । चतुर्द्दशे आयुधेराद्धिः । पञ्चदशे पुष्टि इति ।

## अथ सन्यासिनो [८०]महालयाश्राद्धम्

यतो महालयं द्वादश्यामेव कुर्वीत नान्यस्यां तिथौ यतेस्त्रिदण्डिनो वा एकदण्डिनो वा, अत्र तु यतेद्वादश्यां नियतिः । न तु द्वादश्यां यतिनियतिरिति कालादर्शकारः । तदुक्तं वायुपुराणे-

सन्यासिनोऽप्याब्दिकादि पुत्रः कुर्यात् यथाविधिः ।
महालये तु यच्छ्राद्धं द्वादश्यां पारणे न तु ॥

पार्वणविधिना इत्यर्थः ।

## आमश्राद्धम्

तत्र वराहपुराणे-

योगे मघात्रयोदश्यां कुञ्जरच्छाययोगतः ।
तथा भवेत्समेऽंशे च शशिन्यर्के करे स्थितः ॥

---

८०. महालयेति-

नभस्यस्यापरः पक्षो यत्र कन्यां रविर्व्रजेत् ।
स महालयसंज्ञः स्यात् गजच्छायाह्वयः तथा ॥

-वृहन्मनु इति कालसारोद्धृतवाक्यम्- पृ.-३४९ ।

कन्यागते सवितरि दिनानि दशपञ्च च ।
पार्वणेन विधानेन तत्र श्राद्धं विधीयते ॥

-मात्स्योति कालसारोद्धृतवचनमिति- पृ.- ३४९ ।

आश्व युज्याश्च कृष्णायां त्रयोदश्यां मघांशिके ।
प्रावृडतौ यमः प्रेतान् पितृंश्चाथ यमालयात् ॥
विसर्जयति मानुषं कृत्वा शून्यं स्वकं पुरम् ।
क्षुद्धार्त्ताः कीर्त्तयन्तश्च दुष्कृतं ते स्वयं कृतम् ॥
काङ्क्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम् ।
तस्मात्तां तत्रविधीनां वर्जयेत् पायसेन तु ॥
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा ।
ग्रासमात्रं परं गृह्यादन्नं यः प्राप्नुयान्तरम् ॥

करे= हस्तानक्षत्रे- सपाद त्रयोदशदिवसपर्यन्तं च हस्तावस्थानमर्कस्य चाश्वयुजि त्रयोदशी प्रौष्ठपद्यामतीतायामिति शङ्खवचनात् तत्र कुञ्जरछायायोगे तु फलातिशय इति श्राद्धविवेकः ।
कुञ्जरछायावन्मघायोगोऽपि फलातिशय एव लक्ष्मीधरः । मनुः-

यत्किञ्चन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षयमेवस्याद् वर्षासु च मघासु च ॥

याज्ञवल्क्यः-

यदि चातिशयस्थश्च सर्वं दानं च अश्नुते ।
तथा वर्षा त्रयोदश्यां मघासु च विशेषतः ॥
मघात्रयोदशी श्राद्धं गयाश्राद्धं प्रशस्यते ॥

अत्र त्रयोदशीविषयानेकवाक्यपर्यालोचनया प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदश्यां पुत्रिणा अपुत्रिणा वा पिण्डसहितमेवावश्यं श्राद्धं कर्त्तव्यमिति गम्यते । मघायुक्तायान्तु तस्यामेव ज्येष्ठपुत्रवता पिण्डरहितं श्राद्धं कर्त्तव्यमिति कल्पतरुकारः । तत्र देवीपुराणे कन्यागतापरपक्षाधिकारे-

तथापि महती पूजा कर्त्तव्या पितृदैवते ।
ऋक्षे यत् पिण्डदानन्तु ज्येष्ठपुत्रो विवर्जयेत् ॥

पितृदैवतऋक्षं- मघा । अतएव मघासु कुर्वतः श्राद्धं ज्येष्ठपुत्रो विनश्यति इति यत् षट्त्रिंशन्मनुवचनं तत् पिण्डदाननिषेधपरम् ।

कृष्णपक्षत्रयोदश्यां यत् श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चयः ॥

इत्यङ्गिरसो वचनाच्छ्राद्धं च निषिद्धं किन्तु पिण्डदाननिषेधपरम् । यत्तु-

मघायां पिण्डदानेन ज्येष्ठपुत्रो विनश्यति ॥

इति वचनात् ज्येष्ठपुत्र इति विषमाणां पुत्राणां न ज्येष्ठपुत्रः । किन्तु प्रथमोत्पन्न इति विद्याकरः । विद्यमानानां पुत्राणां ज्येष्ठ इति मदनपारिजातकारः[८१] ।

## अथ शस्त्रादिहतानां चतुर्दशीश्राद्धम्

तत्राह मरीचिः-

समत्वमागतस्यापि पितुः शस्त्रहतस्य वै ।
एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये ॥

समत्वमागतस्य- सपिण्डीकृतस्य, चतुर्दश्यां शस्त्रहतस्यैव नान्यस्यां तिथावित्यर्थः । शस्त्रहतस्यैवेत्यत्रैव शब्द उभयत्रेति । अत्र उपवसतो ब्राह्मणोऽग्नीनादधीतेति बहुभिरित्यत्रनियमः । शतानन्दसंग्रहे-

मघाश्राद्धं न कुर्वीत अकृत्वा शस्त्रघातिने ।
कृत्वा तु विधिवत्तस्मैशेषे दर्शे समापयेत् ॥

अयमर्थः- शस्त्रहतानां चतुर्दश्यामिति वचनादन्यप्राप्तौ वचनमिदं शस्त्रघातिने अकृत्वामघाश्राद्धं न कुर्वीत अपि तु शस्त्रघातिने कृत्वैव कुर्वीत । शस्त्रहत प्रभृति षट्पुरुषेभ्यः कुर्यादिति । यावद्विधिवदिति, चतुर्दश्यामेकोदिदष्टश्राद्धविधिं कृत्वा दर्शे पार्वणं श्राद्धं कुर्यादित्यर्थः । तथा च स्मृत्यन्तरे-

अशस्त्रेण हताः केचित् यश्च शस्त्रैर्निपातितः ।
तेभ्यः पिण्डत्रयं देयं कर्त्तव्यमपरेऽहनि ॥

कर्त्तव्यमिति मातामहस्यापि पिण्डत्रयं देयमित्यर्थः । तदाह गौतमः-

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्त्तव्यं विशषान्नरकं व्रजेत् ॥

ननु केवल शास्त्रहतस्य चतुर्दश्यां श्राद्धं न । किन्तु दुर्मरणे मृतानां चतुर्दश्यामेव श्राद्धम् । तत्र बृहन्मनुः-

---

८१. अतः कन्यागतापरपक्षाधिकारे मघायुक्तत्रयोदश्यां विद्यमाने ज्येष्ठतवता पिण्डरहितं श्राद्धं कर्त्तव्यमिति सिद्धम् । मदनपारिजाते सप्तमस्तवके- पृ.- ५२६ ।

सर्पैहताः रणे वाणैः कुम्भीराश्चैर्गजैः वृषैः ।
उत्पातेन च वज्रैश्च श्राद्धं तेषां चतुर्दशी ॥

पक्षश्राद्धन्तु उक्तं वायुपुराणे सकृत्करणपक्षे-

युवानस्तु गृहे यस्य मृतास्तेषां तु दापयेत् ।
शस्त्रेण वा हताः ये वै तेषां दद्याच्चतुर्दशीम् ॥

माधवीकारपराशरौ-

श्राद्धं करुणया कुर्यादपुत्रस्य महालये ।
एकोद्दिष्टेन विधिना न कुर्यात्पुत्रिणो क्वचित् ॥

## अथ साग्निक महालयाश्राद्धम्

अमावास्यायामेव । तदुक्तं संग्रहे- काम्यं तन्त्रेण नित्यं स्यात्तन्त्रेण शास्त्रस्य सिद्धिस्याद्देवत्वं तु देशाद्दैवतैरैक्यं भवेदिति । कृष्णपक्षे श्राद्धप्रकरणे तथा आहिताग्नेरमावास्यायां नियम इति कर्कभाष्कयारः । मनुरपि-

न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते ।
न दर्शे न विनाश्राद्धमाहिताग्नेर्दिजन्मनः ॥

यः स्यात् पितृयज्ञाङ्गमूतोऽग्नौ होमकरणे होमो न लौकिकेऽग्नौ विधियते। किन्तु दक्षिणाग्नौ दर्श एव विद्यते । दर्श एव तदुद्धरणस्य विद्यमानत्वात्। एतेनाहिताग्नेश्च द्विजातेरमावास्याकर्माचरणं विना कृष्णपक्षस्य दशम्यादौ श्राद्धं न विधीयते । मृताहश्राद्धादेस्तु निषेधस्तस्य निमित्तकत्वेन चोदितत्वात् इति गोविन्दराजः ।

## अथ गयासमयोगः

तत्र पक्षाधिकारे- तस्मिन् महालयेऽपि भरणीनक्षत्रं सा महाभरणी उच्यते। अस्मिन् या त्रयोदशी सा गजच्छाया उच्यते । या मघाष्टमी सा गयोच्यते । तदुक्तं मत्स्यपुराणे-

भरणी पितृपक्षे तु महती परिकीर्त्तिता ।
तस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ॥

यमस्मृतावपि-

यदेन्दुः पितृदैवत्ये सिंहश्चैव करेस्थितः ।

याम्यातिथि भवेत् सा च गजच्छाया प्रकीर्त्तिता ॥
आषाढ्यां पञ्चमे पक्षे गया मध्याष्टमी स्मृता ।
त्रयोदशी गजच्छाया तुल्या तु पैतृकं कृतम् ॥

## अथ संक्रान्तिश्राद्धम्

तत्र विष्णुः- आदित्यसंक्रमणं विषुवद्वयं विशेषेण सायनद्वयं व्यतीपातो जन्मर्क्षमभ्युदयश्च ।

एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः ।
श्राद्धमेतेषु यद्दत्तं तदानन्ताय कल्प्यते ॥

श्राद्धविवेकः-

अयेन द्वितीये श्राद्धं विषुवद्वितये तथा ।
संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते ॥

कल्पतरुः-

ततः प्रभृतिसंक्रान्तावुपरागादि पर्वसु ।
त्रिपिण्डमाचरेत् श्राद्धमेकोद्दिष्टं मृताहनि ॥

मत्स्यपुराणवचनात् विकल्प एव पिण्डदानविधिनिषेधयोस्तु[८२] ग्रहणाग्रहणवत् ।

## अथोदकुम्भश्राद्धम्

तत्र हारीतः-

मृते पितरि वै पुत्रः पिण्डमाद्यं समापयेत् ।
अन्नं कुम्भञ्च विप्राय प्रेतं निर्दिश्यधर्मतः ॥

पारस्करः- अहरहमन्नमस्मै ब्राह्मणायोदकुम्भञ्च दद्यात् । पिण्डमप्येके निपृणन्ति । पिण्डमेको निर्वपणमिच्छन्ति केचित्, वपनं ददतीत्यर्थः । प्रेतनिर्देशधर्मतः इति वचनात् प्रेतैकोदिष्टवत् केवलमहरह क्रियमाणत्वात् नित्यश्राद्धवत् ॥

---

८२. ग्रहणाग्रहणवदिति- ज्योतिष्टोमस्यातिरात्राख्यसंस्थायामतिरात्रे षोडशिनं गृह्णाति । नाति रात्रे षोडशिनं गृह्णाति इत्युभयविधवचनप्राप्त्या यथा षोडशीसंज्ञकपात्रग्रहण-विकल्पस्तथात्रापि- नि.सि.टि. पृ.-५ ।

मत्स्यपुराणे-

नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितः ॥

स्मृत्यन्तरे-

अतिलः पापिना वार्घ्योर्देयोत्सर्गो क्षयस्तथा ।
स्वधावाचनमित्येतन्नित्यश्राद्धं चतुष्टयम् ॥

याज्ञवल्क्यः-

ब्रह्मचारी भवेत् श्राद्धं भुक्त्वा श्राद्धन्तु नैत्यिकमिति
वचनात् निमित्ततामिति कर्त्तव्यताभावः ॥

याज्ञवल्क्यः-

अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजे ॥

अयमर्थः- संवत्सरादर्वाक् सपिण्डीकरणं कृतं यस्य तदुद्देश्येन प्रतिदिवसं प्रतिमासं यद्वत् संवत्सरं शक्त्यनुसारेणान्नमुदकुम्भसहितं ब्राह्मणाय दद्यात् ॥

## अथ उदकुम्भश्राद्धफलमाह

तत्र मत्स्यपुराणे-

यावद्वर्षं तु यो दद्यादुदकुम्भं विमत्सरः ।
प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् ॥

## अथ मासिकश्राद्धनिर्णयः

तत्र ऋष्यशृङ्गः-

एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।
मासेऽन्यस्मिन् तिथौ तस्यां कुर्यादन्तरितं तदा ॥

एकोद्दिष्टपदमुभयमासिकोपलक्षकम्- अन्तरितं मासिकादुत्तरमासिक-सम्बधिकम् । मासिकादुत्तरमासिकं मृताहे कुर्यादित्यर्थः ।

शङ्खोऽपि-

नवश्राद्धं मासिकञ्च यावदन्तरितं भवेत् ।
तदुत्तरस्य स्वातन्त्र्यादनुष्ठेयं प्रचक्षते ॥

स्वातन्त्र्यम्- समानतन्त्रत्वम्, कालादर्शे च-

आपद्याद्यकृतं तत्तु कुर्यादूर्ध्वं मृताहतः ॥

अयमर्थः- आपदादीनामकृतमन्तरितं यन्मासिकं तत्तदूर्ध्वं मृताहतः उत्तरमासदिने कुर्यादिति । किञ्च मृत्यूत्तरमन्यथोक्तम् ।

मासिकाब्दे तु सम्प्राप्ते कदाचिन्मृतसूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शेवाऽपि मनीषिणः ॥

मासिकाब्द इति प्रतिमासविहितमेकोद्दिष्ट श्राद्धमित्यर्थः ।

## अथ त्रिपक्षमाह

तत्र कार्ष्णाजिनः-

न्यूनाधिकेषु मासेषु विषमे हि समेऽपि वा ।
त्रैपक्षिकं त्रिपक्षस्यान्मृताहे हीतराणि तु ॥

भविष्ये-षष्ठे षण्मासिकं कुर्याद् द्वादशी मासि चाब्दिकम् ।
त्रैपक्षिकं भवेद् वृत्ते त्रिपक्षे तदनन्तरम् ॥

वृत्ते= प्रवृत्ते इत्यर्थः ।

कात्यायनः-

यत्र वा तत्र वा मासि षष्ठे षाण्मासिकं भवेत् ।
त्रैपक्षिकं त्रिपक्षे च वृत्ते स्यात्तदनन्तरम् ॥

यत्र वा तत्र इति मलिम्लुचे च । शुद्धेऽब्दे वा तदनन्तरम् षष्ठे चत्वारिंशे इति । त्रिपक्षादर्वाक् यत्र प्रेतकर्म तदाद्यदिवसादारभ्याहिताग्नेः । कार्यम्। तदाह जातुकर्ण्यः-

ऊर्ध्वं त्रिपक्षाद् यत्श्राद्धं मृतेऽहन्येव तद् भवेत् ।
अधस्तु कारयेत् दाहादाहिताग्नेर्दिजन्मनः ॥

त्रिपक्षादि यच्छ्राब्दं तन्मृताह एवेत्यर्थः । अनाहिताग्नेस्तु सर्वं मृताह एव । तदाह यातुकर्णः-

एकाग्नेर्मरणादूर्ध्वमाशौचं श्राद्धमेव च ।
यस्य च त्रयमग्नीनां तस्योर्ध्वं दाहकर्मणः ॥

## अथ ऊनश्राद्धनिर्णयः

तत्र गार्ग्यः-

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
नरः श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥

मरीचिरपि-

त्रिपुष्करेषु नन्दासु सिनीवाल्यां भृगोर्दिने ।
चतुर्दश्यान्तु नोनानि कृत्तिकासु त्रिपुष्करे ।
त्रिपुष्करशब्दान्तर्गतत्रिपुष्कराजयुपलक्षयति ॥

## अथ सपिण्डीकरणनिर्णयः

तत्र कात्यायनः- ततः संवत्सरे पूर्णे सपिण्डीकरणं त्रिपक्षे वा यदहर्वा वृद्धिरापद्यते इति ॥

बौधायनः- अथ संवत्सरे सम्पूर्णे सपिण्डीकरणं त्रिपक्षे वा तृतीयेमासि षष्ठे वैकादशे वा द्वादशाहेति ॥पैठीनसिः-

संवत्सरान्ते सपिण्डं नवमे मासि केचित् ॥

अधुना कालव्यवस्था विचार्यते । अशौचापगमे दर्शात् प्राक् सपिण्डं साग्निना सुतेन कार्यम् । ततः साग्नेरमावास्यायामपराह्ने पिण्डपितृयज्ञेन चरन्ति इति पिण्डपितृयज्ञविधानात् सपिण्डीकरणे कृत एव सपिण्डपितृयज्ञकर्त्तव्यमित्यर्थः ।

तदाह गालवः-

सपिण्डीकरणात् प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्याः पितृयज्ञं प्रवर्त्तते ॥

आहिताग्नेः सिनीवाल्यामिति दर्शोपलक्षणम् । न सपिण्डीकरणं विना पिण्डपितृयज्ञसिद्धिः । तत्र जाबालिः-

नासपिण्डयोऽग्निमान् पुत्रः पितृयज्ञं समाचरेत् ।
पापीभवत्यकुर्वन् हि पितृहा चोपजायते ॥

दोषश्रवणात् साग्निनासुतेन दर्शात् प्राक् अवश्यमेव सपिण्डीकरणं कर्त्तव्यम् । तदुक्तं छन्दोगपरिशिष्टे-

एकादशाहं निर्वर्त्य अर्वाक् दर्शाद् यथाविधि ।
प्रकुर्वीताग्निमान् पुत्रो मातापित्रोः सपिण्डनम् ॥

कार्ष्णाजिनोऽपि-

सपिण्डीकरणं कुर्यात् पूर्ववदग्निमान् सुतः ।
परतोदशरात्राच्चेत् कुहुरब्दोपरोतरः ॥

दशरात्रात् परतः कुहुश्चेदेकादशाहात् कुहूस्तदित्यर्थः ।

हारीतः-

द्वादश्येकादशीवाह्नि साग्निः कुर्यात् सपिण्डनम् ।
शावाशौचस्य मध्ये तु कुर्यादेवाविशङ्कयन् ॥

अशौचमध्येऽपिपितृयज्ञस्य शौचत्वात् वैतानिकपरमेतत् । [८३]वैतानः= श्रौताग्निकर्म । भविष्ये-

यजमानोऽग्निमान् राजन् प्रेतश्चानग्निमान् भवेत् ।
द्वादशाहे भवेत् कार्यं सपिण्डीकरणं सुतैः ॥

यजमानः- कर्त्ता- अशौचापगतो द्वादशाहः । सहकृतत्वात् त्रयोदशेऽह्नि सपिण्डीकरणं कुर्यादिति लक्ष्मीधरः, अनन्तरं कालस्त्रिपक्ष इत्यर्थः । तदाह सुमन्तुः-

प्रेतश्चेदाहिताग्निः स्यात् कर्त्तानग्निर्यदा भवेत् ।
सपिण्डीकरणं तस्य कुर्यात् पक्षे तृतीयके ॥

अतः अब्दोपरीत्यर्थ इति वचनात् इतरोऽनग्निः संवत्सरे सपिण्डीकरणं कुर्यात् । तदुक्तं भविष्यपुराणे-

सपिण्डीकरणं कुर्यात् यजमानोऽप्यनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्णेब्दे भरतर्षभः ॥

गोभिलः-

द्वादशाहादिकालेषु प्रमादान्न च लुप्यते ।
सपिण्डीकरणं कुर्यात् काले पूर्त्तिरभाविते ॥

यत्तु यदहर्वा वृद्धिरापद्यते तदहः सपिण्डीकरणं कर्त्तव्यमिति गोभिलः तेनोक्तं कल्पतरुणा तूत्तरस्मिन्मासिवृद्धौ निश्चितायामेतेन नवम

८३. वितानो भवः वैतानः, शालाग्निकर्म इत्यर्थः

षण्मासादयः सपिण्डीकरणे अपकर्षकालः इत्युक्तः । अतो वृद्धिदिने सपिण्डनं किन्तु वृद्धिसन्निहित तद्दिने इति श्राद्धविवेकः ।

तस्य मरणदिन इति कालादर्शकारः । वृद्धिः- शुभम् । सपिण्डीकरणापकर्षेति सिद्धं तत्र पैठीनसिः ।

सपिण्डीकरणादर्वाक् कुर्वन् श्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्यात् श्राद्धानि तानि तु ॥

यदा मुख्यकालत्वान्नास्त्यकाल एव करोति तदा प्रत्याब्दिकं यो यत् करोति पार्वणमेकोद्दिष्टं वा, तिथौ त्विमानि कुर्यात् ।

तथा- सपिण्डीकरणादूर्ध्वं यदाकुर्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्यात् तथा कुर्यात् स तान्यपि ॥

अपकर्षनिमित्तमाह-

अनन्यकुलधर्माणां पुंसां चैवायुपक्षयात् ।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥

कुलधर्मज्योतिरागमादि सिद्धान्तानन्तर्भाविपरचक्रोभयोत्पन्नम्लेच्छदेश-गमनादिनिमित्तरशौचपरद्वादशदिनानि श्राद्धापकर्षकाल इति श्राद्धविवेकः । हारीतः-

वृद्धिश्राद्धे गयां गच्छन् साग्निः सन्यासनात् पितुः ।
तथैव पुत्रिकापुत्रः सद्यः कुर्यात् सपिण्डनम् ॥

सद्य एतेनाशौचानन्तरं कुर्यादित्यर्थः । कल्पतरौ तु निरग्नेर्वृद्धादपकर्ष-निमित्ते सति द्वादशाहे सपिण्डीकरणं कर्त्तव्यमिति । शूद्रस्य द्वादशाह एव । तदुक्तम्-

मन्त्रवर्ज्यं हि शूद्रस्य द्वादशेऽह्नि सपिण्डताम् । इति विष्णुवचनात् । एवं शब्दो निश्चयार्थः । एतेनाशौचमध्ये कर्त्ता तत् कालतः शुचिरित्यर्थः । यत्तु कात्यायनवचनम्-

सर्वेषामेव वर्णानामशौचान्ते सपिण्डनमिति ॥

तद्विषयेण विष्णुवचनेन वाधितशूद्रव्यतिरिक्तविषयमिति कालादर्शकारः-

सपिण्डीकरणश्राद्धमुक्तकाले न चेत् कृतम् ।

रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत् ॥

उक्तकाले द्वादशाहादिकाल इत्यर्थः ।

## अथ मातृसपिण्डीकरणनिर्णयः

तत्र छान्दोगपरिशिष्टे कात्यायनः-

मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।
तथोक्तनैव कालेन पुत्रिकायाः न चेत् सुतः ॥

अस्यार्थः- पुत्रेण मातुः सपिण्डीकरणं पितामह्यादिभिः सह कर्त्तव्यम्।पुत्रिका पुत्रेण मातामहादिभिः सहेति कल्पतरुकारः । भर्त्तरि जीवति सति पितामहादिभिः सहेति श्राद्धविवेकारप्रभृतयः । यथोक्तेनैव कल्पेन तस्य पूर्णसंवत्सरे षण्मासे सत्रिपक्ष इत्यादीनि आश्वालायनाद्युत्कानि । एतत्पुत्रिका पुत्रव्यतिरिक्तस्य ।

तथैव पुत्रिका पुत्रः सद्यः कुर्यात् सपिण्डनम् ॥

इति वचनात् तत्र विज्ञानेश्वरः । आरोहणे विशेषमाह तत्र शतातपः-

मृता चानुगता नाथ सा तेन सह पिण्डताम् ।
अर्हति स्वर्गवासश्च यावदाभूतसंप्लवम् ॥

यमः- पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ।
स मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ॥

इति फलश्रवणादन्वारोहणे तु स्व पित्रैव सह सापिण्ड्यं कुर्यादित्यर्थः। असुरादिनिन्दितविवाहविषयाणि बहूनि सन्ति ग्रन्थविस्तराभयान्न लिखितानि । प्रयोजनत्वे तावतैव और्ध्वदैहिकविशेषः । तत्रैव आपस्तम्बः-

दम्पत्योरेकदा मृत्युर्दहेदेकचितावुभौ ।
ततः पुत्रेण कर्त्तव्यं पथपिण्डोदकक्रिया ॥
मृतं पतिमनुव्रज्य पत्नी चेज्जलनं गताम् ।
तत्रापि [८४]दाहस्तन्त्रेण पृथगास्थि क्रिया भवेत् ॥

**वैशम्पायनः-**

एकचित्यां समारुढौ दम्पतीनिधनं गतौ ।

---

८४. तन्त्रेण नाम सहैवानुष्ठानमिति ।

तन्त्रेण श्रपणं कृत्वा पृथक् पिण्डं समर्पयेत् ॥

एकपात्रेऽन्नसम्पादनमित्यर्थः ।

## अथ पितामहप्रपितामहयोरकृतसपिण्डीकरणविचारः

तदुक्तं छान्दोग्यपरिशिष्टे-

पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम् ।
असंकृतौ न संस्कार्यौ पूर्वौ पुत्रप्रपुत्रकौ ॥
पितरं तत्र संस्कृत्यादिति कात्यायनोऽब्रवीत् ।
पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा ।
पितामहेन पितरं संस्कृत्यादिति निश्चयः ॥

अस्यार्थः- पितुः सपिण्डतां कृत्वा प्रेतीभूतयोरपि पितामहप्रपितामहयोरामासान्मासिकं प्रति पार्वणं कर्त्तव्यम् । न तु तयोः सपिण्डीकरणप्रतीक्षा कार्या । असंस्कृतौ न संस्कार्याविति सापिण्डेप्यसंस्कार्यौ समाश्रिताविति प्रागुक्त एवार्थः । उपकर्षापकर्षकार्यो इत्यनेन वचनेनोक्तम् । कथमसंस्कृतेन सह संस्कार इत्याह पापिष्ठमपीति, पापिष्ठमकृतसपिण्डीकरणं पितरं शुद्धेन कृतसपिण्डीकरणेन पितामहेन पापकृता वा अकृतसपिण्डीकरणे वाऽपि शुद्धं कुर्यादिति शास्त्रेषु निश्चयः। अस्यार्थः- अतो वचनबलात् दोष इति तात्पर्यः । पूर्वौ-पितामहप्रपितामहौ । यत्र केनापि निमित्तेनासंस्कृतौ अकृतसपिण्डीकरणौ तत्रापि ताभ्यां सह पितरं संस्कृत्यादिति कल्पतरुकारः । श्राद्धविवेककारेणाप्ययं पक्षः स्वीकृतः ।

## अथ सन्यासिनां सपिण्डीकरणनिषेधः

तत्रोशनाः-

सपिण्डीकरणं तेषामकर्त्तव्यं सुतादिभिः ।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥

त्रिदण्डग्रहणादित्येतदुपलक्षणम् । त्रिदण्डग्रहणादेकलक्षणम् । एकदण्डग्रहणादेवेत्यर्थः । तदुक्तं चतुर्विंशतिमते-

चतुर्थमाश्रमं गच्छेत् ब्रह्मविद्यापरायणः ।
एकदण्डी त्रिदण्डी वा सर्वसङ्गविवर्जितः ॥

दण्डग्रहणमात्रेण नैव प्रेतो भवेद् यतिः ।
अतः सुतैर्न कर्त्तव्यं पार्वणं तस्य सर्वदा ॥
एकोद्दिष्टं यतेनास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात् पार्वणं तस्य सर्वदा ॥
एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥

विश्वामित्रः-

एकोदिष्टं जलं पिण्डमशौचं प्रेतसत्क्रियाम् ।
न कुर्याद् ब्राह्मणादन्यात् ब्रह्मभूताय भिक्षवे ॥
कुर्यादेकादशाहेस्य पार्वणं न सपिण्डनम् ।
त्रिदण्डग्रहणादेव प्रतत्वं न हि विद्यते ॥

व्यासोक्त "नारायणवलिर्दानं यतीनां कर्त्तव्यम् ।

---

८५. नारायणबलेः स्वरूपं मिताक्षरायां यथा-

एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिम् ।
विष्णुं समर्च्चयेद्देवं यमं वैवस्वतं तथा ॥
दशपिण्डान् घृता भ्यक्तान् दर्भेषु मधुसंयुतान् ।
तिलमिश्रान् प्रदद्याद्वै संयतो दक्षिणामुखः ॥
विष्णुं वुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् ।
नामगोत्रग्रहं तत्र पुष्पैरभ्यर्च्चनं तथा ॥
धूपदीपप्रदाञ्च भक्षं भोज्यं तथापरम् ।
निमन्त्रयेत विप्रान् वै पञ्च सप्त नवापि वा ॥
विद्यातपः समृद्धान् वै कुलोत्पन्नान् समाहितान् ।
अपरेऽनि संप्राप्ते मध्याह्ने समुपोषितः ॥
विष्णोरभ्यर्च्चनं कृत्वा विप्रां स्तानुपवेशयेत् ।
उदङ्मुखान् यथा ज्येष्ठं पितृरूपमनुस्मरन् ॥
मनोनिवेश्य विष्णौ वै सर्वं कुर्यादतन्द्रितः ।
आवाहनादि यत् प्रोक्तं देवपूर्वं तदाचरेत् ॥
तृप्तान् ज्ञात्वा ततो विप्रान् तृप्तिं पृष्ट्वा यथाविधि ।
हविष्यव्यञ्जनेनैव तिलादिसहितेन च ॥

नारायणवलीः दद्युः परिव्राजांस्तु तत् सुताः ।
प्रत्यब्दं प्रतिमानञ्च एकोदिष्टं च पार्वणम् ॥

## अथ अपुत्रस्य सपिण्डीकरणविचारः

अपुत्रस्य पितृगणेन सह समानपिण्डता नोपपद्यते । तथा च कल्पतरुभाष्ये-

वर्षे वर्षे तु कर्त्तव्या ब्राह्मणैरुदकक्रिया ।
अदैवं भोजयेच्छ्राद्धे पिण्डमेकञ्च निर्वपेत् ॥

अपुत्रस्य प्रेतस्य प्रतिसंवत्सरं बान्धवैः कर्त्तव्यमेकोद्दिष्टम् । अत एव न सपिण्डिकरणमपुत्रस्येति कर्कभाष्यकारः। तथा च धबलसंग्रहे-

सपिण्डिकरणं नास्ति अपुत्रस्य द्विजन्मनः ।
अशौचमुदकं पिण्डमेकोद्दिष्टं न पार्वणम् ॥
अपुत्रस्य परेतस्य नैव कुर्यात् सपिण्डनम् ।
अशौचमुदकं पिण्डमेकोद्दिष्टं न पार्वणम् ॥
अपुत्राः वा स्मृताः केचित् पुरुषाः स्त्रियोपि वा ।
तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम् ॥

---

पञ्चपिण्डान् प्रदद्याच्च दैवं रूपमनुस्मरन् ।
प्रथमे विष्णवे दद्यात् ब्रह्मणे च शिवाय च ॥
यमायसानुचराय चतुर्थं पिण्डमुत्सृजेत् ।
मृते संकीर्त्त्य मनसा गोत्रपूर्वमतःपरम् ॥
विष्णोर्नाम गृहीत्वेवं पञ्चमं पूर्ववत्क्षिपेत् ।
विप्रानाचम्य विधिवद्दक्षिणाभिः समर्चयेत् ॥
एकं विद्वत्तमं विप्रं हिरण्येन समर्च्चयेत् ।
गवा वस्त्रेण भूम्या च प्रेतं तं मनसा स्मरन् ॥
ततस्तिलोम्भो विप्रास्तु तस्मैदद्युः समाहिताः ।
मित्रभृत्यजनैः सार्द्धं पश्चाद्भुञ्जीत वाग्यतः ॥
एवं विष्णुमते स्थित्वा यो ददात्यात्मघातिने ।
समुद्धरति तं क्षिप्रं नात्र कार्या विचारणा ॥

-इति मिताक्षरायां या.स्मृ.प्रा.अ.श्लो. ६ ।

इति वचनात् अपुत्रस्य सपिण्डीकरणाभावः प्रतीयते । अपुत्रस्य सपिण्डीकरणं नास्ति पत्न्यस्तु इति । तदाह-

सर्वाभावे स्वयं पत्न्यः स्वभर्त्तृणाममन्त्रकम् ।
सपिण्डीकरणं कुर्युः ततः पार्वणमेव च ॥
अपुत्रे प्रस्थिते कर्त्ता न भवेत् श्राद्धकर्मणि ।
तत्र पत्न्यापि कुर्वीत सापिण्ड्यं पार्वणं तथा ॥

लौगाक्षिसुनन्तुवचनाभ्यां सपिण्डीकरणस्य और्ध्वदेहिकस्यावश्यं कर्त्तव्यता प्रतीयते । अतः प्रजाश्चोत्पादयितव्या इति विध्यर्थं वा तथा वर्णनीयादेव वचनमिति । अपुत्रस्य परेतस्य नैव कुर्यात् सपिण्डताम् । पत्न्यपि पार्वणं तथेति परस्परविरोधत्वात् षोडशीग्रहणाग्रहणवद् विकल्पः । अथवा अविवाहितस्य सपिण्डीकरणाभावः ।

केवलं तानि दीयन्ते एकोद्दिष्टादि षोडश ।
पिशाचत्वं ध्रुवं तस्य दत्वा श्राद्धशतैरपि ॥

इति वचनादेतावदेव कर्त्तव्यम् । अपुत्रस्य परेतस्य नैव कुर्यात् सपिण्डनम् इति एतेनानुपनीतस्य सपिण्डीकरणाभावः इति केचित् व्याचक्षन्ते । तथा च देवलः-

द्वादशाद् वत्सरादर्वाक् पौगण्डमरणे सति ।
सपिण्डीकरणं न स्यादेकोद्दिष्टादि कारयेत् ॥

पौगण्डो= बालः, तन्मरणे, आदिशब्देन एकादशेऽहनि विहितदानादेरपि संग्रहः ।

## अथ संवत्सरनिर्णयः

तत्र देवलः-

पितरो प्रमृतो यस्य देहः तस्याच्छुचिर्भवेत् ।
न दैवं नापि वै पित्र्यं यावत् पूर्णो न वत्सरः ॥
पितर्युपरते चैव अशुद्धं तद् गृहं भवेत् ।
नाश्नन्ति पितरो देवाः यावत् पूर्णो न वत्सरः ॥
तीर्थस्थानं महादानं श्राद्धश्चैवान्यतर्पणम् ।
प्रथमेऽब्दे न कुर्वीत महागुरुनिपातेन ॥

प्रेतश्राद्धं प्रेततर्पणादन्यं न कर्त्तव्यम् । स्याध्यायं चान्यतर्पणमिति केचित् पठन्ति । स्वाध्यायोऽत्र वेदारम्भः । शातातपः-

आमश्राद्धं परान्नञ्च मधुमांसञ्च मैथुनम् ।
वर्जयेदब्दमेकञ्च महागुरुनिपातेन ॥

मैथुनं= विवाहः ।

पितृशब्दमशौच स्यात् षण्मासान् मातुरेव च ।
मासत्रयं तु भार्यायाः तदर्द्धं भ्रातृपुत्रयोः ॥

पितृमृत इति सम्बन्धः । अत्र मातृशब्दः गौणमातृपरः । तदुक्तं स्मृत्यन्तरे-

कनिष्ठमातुः षण्मासान् पित्रोः संवत्सरे इति ॥

मनुः-

पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्त्तते ।
मातर्यपि मृतायाञ्च पितृश्राद्धादृते समा ॥

ऋते समा इत्युभयत्र सम्बन्धः । एतेन सांवत्सरिकश्राद्धमुभयत्र कर्त्तव्यमिति शुद्धिमुक्तावलीकारप्रभृतयः । तन्न युक्तम् ।

मातर्यपि मृतायान्तु श्राद्धं कृत्वा च पैतृकम् ।
तस्या न वत्सरं कुर्यात् प्रेते च पितरि क्वचित् ॥

इति वाक्यदर्शनात् समाचारान्मातरि मृते संवत्सरमध्ये पितृव्यादीनामपि प्रेतकार्यमवश्यं कर्त्तव्यमेव । तथा लौगाक्षिः-

अन्येषां प्रेतकार्याणि महागुरुनिपातने ।
कुर्युः संवत्सरात् पूर्वं नैकोद्दिष्टं न पार्वणम् ॥
माङ्गल्यमुत्सवं कार्यं परपाके च भोजनम् ॥
दीपदानं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
प्रथमेऽब्दे न कुर्वीत योजनेऽपि कृते सति ॥

योजने= सापिण्ड्ये । मनुरपि-

उपाकर्म गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न कुर्यादाब्दिकात् पूर्वं सापिण्ड्येऽपि कृते पितुः ॥

निमित्तान्तरेण कृते संवत्सरमध्येऽपि काम्यं कर्त्तव्यमेव । एवमपकृष्टे

सपिण्डने पार्वणमपि संवत्सरमध्ये कर्त्तव्यमेवेति श्राद्धविवेककारः ।
तथा च मत्स्यपुराणे-

सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभाक् भवेत् ।
वृत्तीष्टापूर्त्तियोग्यश्च गृहस्थश्च सदा भवेत् ॥

वृत्तिः= प्रतिग्रहादिः, इष्टि= यागादिः, आपूर्त्तिः= वापिकूपतडागादिः ।

## अथ सपिण्डीकरणोत्तरश्राद्धम्

तत्र कल्पतरुः-

प्रत्यब्दं मृताहनि पार्वणैकोद्दिष्टयोस्तुल्यबलविकल्पे प्राप्ते व्यवस्था । तथा औरसः क्षेत्रजः साग्निः प्रत्यब्दं पार्वणमेव कुर्यात् ।

आरसक्षेत्रजौ पुत्रौ विधिना पार्वणावहौ ॥

इति जाबालिवचनात् ।

यत्र तत्र प्रदातव्यं सपिण्डीकरणात्परम् ।
पार्वणेन विधानेन देयमग्निमता सह ॥

इति मत्स्यपुराणवचनान्निरग्निकावौरसक्षेत्रजौ इतरे दशपुत्राः साग्नेयाः । निरग्नयश्च प्रत्यब्दमेकोद्दिष्टमेव मृताहनि कुर्युरिति महार्णवप्रकाशकारः । श्राद्धविवेककारेणाप्ययं पक्षः स्वीकृतः । एतद् विज्ञानेश्वरादिभिर्नाचरितम् । यत्र यमः-

सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।
मातापित्रोः पृथक् कार्यमेकोद्दिष्टं मृतेऽहनि ॥

यमदग्नि पार्वणमाह-

आपाद्य सहपिण्डत्वमौरसो विधिवत् सुतः ।
कुर्वीत दर्शश्राद्धञ्च मातापित्रोः क्षयेऽहनि ॥

अमावास्यायां क्षयाहे प्रेतपक्षे मृताहे पार्वणमेव । तदुक्तं शब्देन-

अमावास्या क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदा च न ॥

उक्तनित्यनियमपरत्वादन्यत्र क्षयाहे पार्वणैकोद्दिष्टयोर्व्रीहियवयोर्विकल्प एव । तत्रापि वंशसमाचारव्यवस्थितौ सत्यां कार्यमिति विज्ञानेश्वरः ।

कालादर्शे यमः-

सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।
मातापित्रोः पृथक् कार्यमेकोद्दिष्टं मृतेऽहनि ॥

शातातपोऽपि-

सपिण्डीकरणं कृत्वा कुर्यात् पार्वणवत् सदा ।
प्रतिसंवत्सरं विद्वान् छागलेयोदितो विधिः ॥

एवं विधानात् परस्परविरोधदर्शनाद् विकल्पः । कल्पसूत्रभाष्ये च मनुः-

महापिण्डक्रियायान्तु कृतायामस्य धर्मतः ।
अनयैवावृता कार्यं पिण्डनिर्वपणं सुतैः ॥

तथा च याज्ञवल्क्य-

मृताहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥

पार्वणश्च मनुरिति । याज्ञवल्क्य एकोद्दिष्टमिच्छति । उभयोः प्रामाण्यम्। ये निर्णयन्ति तेन निर्णिता भवन्ति । अतो विकल्प इति कर्कभाष्यकारः। महत्पक्षे तु औरसक्षेत्रजयोः साग्निनिरग्निसाधारणादावधिकारः । अतएव पारस्करगृह्यभाष्ये कर्कोपाध्यायः[८६] ।

सपिण्डीकरणात् प्राक् सर्वमेव श्राद्धमेकोद्दिष्टं तदूर्ध्वं पार्वणवदिति । औरसक्षेत्रजव्यतिरिक्तानां साग्निनिरग्निसाधारण-मेकोद्दिष्टमिति । मुख्याभावे प्रतिनिधिरपि शास्त्रार्थ इति प्रतिनिधि-दर्शनात्। तथा च मनुः-

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान् मनीषिणः ॥

## अथ मृताहकालश्राद्धनिर्णयः

तत्र व्यासः-

मासपक्षतिथिस्पष्टो यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दन्तु तथा भूप क्षयाहस्तस्य तद्दिनम् ॥

---

८६.यावत्सपिण्डीकरणात्प्राक् श्राद्धं तत्सर्वमेकोद्दिष्टम् । ऊर्ध्वन्तु पार्वणश्राद्धमन्यत्राभ्युदयात् इति मुद्रितपारस्करगृह्ये कर्कभाष्ये- पृ.- ४८६ ।

तथा चाब्दिकश्राद्धपरित्यागे प्रत्यवायस्मरणात्। भविष्यपुराणे-

पण्डिताः ज्ञानिनो वाऽपि मूर्खाः योषित एव वा।
मृताहं समतिक्रम्य चाण्डालाः कोटिजन्मसु ॥

अकरणे तादृशफलमाह शतानन्दसंग्रहे-

श्राद्धानां चैव सर्वेषां श्रेष्ठं सांवत्सरं स्मृतम्।
तत्प्रयत्नेन कुर्वीत अकुर्वन् नरकं व्रजेत् ॥

हरिहरसमुच्चये-

ग्रहणानां सहस्रेषु अमावास्याशतेषु च।
ततोऽक्षयतरं यान्ति यस्तु कुर्यान् मृतेऽहनि ॥

स्मृतिः-प्रतिसंवत्सरं कार्यं मातापित्रोर्मृतेऽहनि।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥

एतच्च एकोद्दिष्टपार्वणमित्यर्थः। एकमुद्दिश्य यच्छ्राद्धं क्रियते तदेकोद्दिष्टम्। त्रीन् उद्दिश्य यच्छ्राद्धं तत् पार्वणमिति। तथा च काण्वः-

एकमुद्दिश्यं यच्छ्राद्धमेकोद्दिष्टं प्रकीर्त्तितम्।
त्रीनुद्दिश्य च यत्तद्धि पार्वणं मुनयो विदुः ॥
एकमुद्दिश्य यच्छ्राद्धं दैवहीनं विधियते।
एकोद्दिष्टं तु तत्प्रोक्तं मध्याह्ने तत्प्रकीर्त्तितम् ॥
कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत्।
आवर्त्तनसमीपे वा तत्रैव नियतात्मनः ॥

समाप्तिकालमाह गौतमः-

प्रारम्भ कुतपे श्राद्धं कुर्यादारोहिणं बुधः।
विधिज्ञो विधिमास्थाय रोहिणं नैव लङ्घयेत् ॥
रोहिणं लङ्घयेद् यस्तु ज्ञानादवज्ञानतोऽपि वा।
आसुरं तद् भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥

इति वचनादेकोद्दिष्टपरमिति। मनुः-

द्यहेऽप्यव्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः।
पूर्वस्यां निर्वपेत् पिण्डमित्यङ्गीरसभाषितम् ॥

अत्र पार्वणश्राद्धं कुतपे प्रारम्भ रौहिणे समाप्तिं कर्त्तुं न शक्यते।

तेनैकोद्दिष्टविषयमिति सिद्धम् । ननु अपराह्णस्पर्शाभाव उभयत्रापि समानः । प्रारम्भे कुतपे श्राद्धं परेद्युः सद्भावो विशिष्यते । एतदेव स्फुटीकृतं सम्भुकरपद्धतौ-

मुहूर्त्तात् सप्तमादूर्ध्वं मुहूर्त्ताद्दशमादधः ॥

एकोद्दिष्टकालोयमिति । ननु पार्वणश्राद्धस्य कुतपे प्रारम्भविधानमपि अस्ति, तत्र कुतपस्वरूपं वायुपुराणे पठ्यते-

दिवसस्याष्टमे भागे मन्दी भवति भास्करः ।
स कालः कुतपो ज्ञेयः पितृणां दत्तमक्षयम् ॥

मत्स्यपुराणे-

अष्टमे भास्करो यस्मात् मन्दी भवति सर्वदा ।
तस्मादनन्तफलदस्तत्रारम्भो विधीयते ॥
ऊर्ध्वं मुहूर्त्तात् कुतपात् यन्मुहूर्त्त चतुष्टयम् ।
मुहूर्त्तपञ्चकं ह्येतत् स्वधामवनमिस्यते ॥

यत्तु पञ्चधाभागे अपराह्णपितृणामिति मन्वादिवाक्यानि बहुनि सन्ति । तथापि मत्स्यपुराणवाक्यात् कुतपे प्रारम्भ मुहूर्त्तचतुष्टयपर्यन्तं यावत्तावत् पार्वणस्य श्राद्धकाल इत्यर्थः । अथवा द्विधाभागपक्षे अह्नः पूर्वभागः पूर्वाह्णः । त्रिधा विभागो दर्शितः ।

ऊर्ध्वं सूर्योदयात् प्रोक्तं मुहूर्त्तानां च पञ्चकम् ।
पूर्वाह्णः पञ्चमः प्रोक्तो मध्याह्नन्तु ततः परम् ॥

शम्भुकरपद्धतौ-

सप्तमात् परतः पञ्चममुहूर्त्ताः पार्वणस्येतरस्य तु ॥

माधवीये-

कुतपाद्यपराह्णान्तव्याप्तिराब्दिक उत्तमा ॥

कालादर्शे-

अमावास्यानन्तरं प्रत्याब्दिकमप्येवमेतद् ग्राह्यमिति ॥

ननु उभयत्रापराह्णव्यापित्वे तिथिक्षयवृद्धौ बौधायन आह-

क्षये पूर्वा तु कर्त्तव्या बृद्धौ कार्या तथोत्तरा ॥

मनुः- द्वयाहर्व्यापिनी चेत् स्यान्मृताहे तु यदा तिथिः ।

पूर्वविद्धैव कर्त्तव्या त्रिमुहूर्त्ताभवेदधः ॥

मरीचिरपि-

द्वयपराह्णव्यापिनी चेदाब्दिकस्य यदा तिथिः ।
महती यत्र तद् विद्धां प्रशंसन्ति महर्षयः ॥

यत्र मृताहतिथिर्महति सा हि ग्राह्या इत्यर्थः। यदा उभयत्रापराह्णव्यापित्वे तिथिसाम्ये तदा विशेषमाह नारदीये-

दर्शश्च पौर्णमासश्च पितुः सांवत्सरं दिनम् ।
पूर्वविद्धामकुर्वाणो नरकं प्रतिपद्यते ॥

शम्भुकरपद्धतौ-

दिनत्रये तु लभ्येत कालश्चेत् प्रथमादरः ।

कालादर्शे- समत्वे पूर्वविद्धैव ॥

अयमर्थः- यदि दिनद्वयेऽपि कुतपरोहिण्यो न स्पृशति तदा पूर्वदिने श्राद्धं कर्त्तव्यम् । तथा च बृहन्मनुः-

यस्यामस्तं रविर्याति पितरस्तरमुपासते ॥

इति वचनात् शम्भुकरपद्धतावपि-

एकोद्दिष्टश्च कार्यश्च न लभेत दिनद्वये ।
मुहूर्त्ते दशमादावप्येकोद्दिष्टं तथा भवेत् ॥

## अथ वैश्वदेवनिरूपणम्

तत्र श्राद्धेषु वैश्वदेवः[८७] किमादौ पश्चाद् वेति । तत्र संवर्त्तः-

---

८७. वैश्वदेवौ क्रतुर्दक्षः सर्वास्विष्टिषु कीर्त्तितौ ।
नित्ये नान्दीमुखे श्राद्धे वसुसत्यौ च पैतृके ॥
नवान्नलम्भने देवौ कामकालौ सदैव हि ।
अपि कन्यागते सूर्ये काम्ये च धूरिलोचनौ ॥
पुरुरवाद्रवौ चैव विश्वदेवौ च पार्वणे ॥ -इति श्राद्धचन्द्रिका पृ.- २८ ।
क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैव च ।
धूरिश्च रोदनश्चैव तथैव च पुरुरवाः ॥
माद्रवाश्च तथैव च विश्वदेवाः प्रकीर्त्तिताः ।
इष्टिश्राद्धे क्रतुर्दक्षः सत्यः नान्दीमुखे वसुः ॥

वैदिके लौकिके वाऽपि हुतोच्छिष्टे जले क्षितौ ।
वैश्वदेवस्तु कुर्वीत पञ्चसूनाद्यमुक्तये ॥

सूनाजन्तुबधविषयदोषः, मनुः-

पञ्चसूना गृहस्थस्य चूल्लीप्रेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तुवाहनम् ॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पञ्चक्लृप्ता महाज्ञयाः प्रत्यहं गृहमेधिनाम् ॥
पञ्चैतान् यो महायज्ञान्नहापयति शक्तितः ।
स गृहेऽपि वसेन्नित्यं सूनादोर्षैर्न लिप्यते ॥
पञ्चयज्ञास्तु यो मोहान्नकरोति गृहाश्रमी ।
तस्य चायं न चापरो लोको भवति धर्मतः ॥

एतेनावासशुद्ध्यर्थं वैश्वदेवं कार्यम् । पाकशुद्ध्यर्थमपि केचित् ।

यस्य चाग्नौ न हूयन्ते यस्य चान्नं न दीयते ।
अभोज्यं तद् भवेदन्नं भुङ्क्त्वा शान्तपनं चरेत् ॥

ननु केवलसूनादोषशुद्ध्यर्थं किन्तु पापक्षयकर्मास्तीति तदुक्तं ८८भगवत्गीतायाम्-

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः ॥

एतद् वैश्वदेवकर्मनिरग्निना प्रवासे स्व पाकासम्भवे तत्रैव कर्त्तव्यम् । जीवत्- पितृकेणाऽपि पृथक् पाके नित्यश्राद्धव्यतिरिक्तं सर्वं कर्त्तव्यम्। श्राद्धं नैव जीवितो दद्यादिति निषेधात् पित्र्यबलिश्च स्यादेव वा पितरि जीवति यः श्राद्धं कुर्यात् येषां पिता कुर्यात् तेषां कुर्यात् । मातामहानामपीति वचनात् एवं नित्यश्राद्धमपि कुर्यात् । स पितुः पितृवत्तेषु अधिकारो न विद्यते । इति कात्यायनस्मरणात् वैकल्पिकमेव।

---

नैमित्तिके कालकामौ काम्ये च धूरिलोचनौ ।
पुरुरवामाद्रवाश्च पार्वणे समुदाहृतौ ॥

- इति बृहस्पतिवचनमिति कालसारः- पृ.- ३९५ ।

८८. यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।

इति मुद्रितभगवद्गीतायां पाठः- अ. ४/३१ ।

अनुपनीतश्चेद् गृहस्थः देवयज्ञादावनधिकाराल्लोपः । केवलं मत्स्यपुराणे-

एतच्चानुपनीतोऽपि कुर्यात् सर्वेषु पर्वसु ॥

इति [८९]पितृयज्ञाधिकारोक्ते नित्यश्राद्धमात्रं कार्यम् । एतद् वैश्वदेव-पार्वणश्राद्धमात्रं कार्यमिति । तदुक्तं स्मृत्यन्तरे-

सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवं स्यात् पश्चादेकादशेऽहनि ॥

कात्यायनोऽपि-

उद्धृत्यघृताक्तमन्नं पृच्छत्यग्नौ करिष्यति ।

अयमर्थः- वैश्वदेवादन्नादोद्धृत्य घृत्तेनाक्तं पृच्छत्यग्नौ करिष्यतीति कर्कभाष्यकारः । व्यवस्थावाक्यमपि दृश्यते तत्र शौनकः- यजुः सामगाश्च पूर्वे । श्राद्धमध्ये बह्वृचाः । अथवा पाकशेषेण वैश्वदेवं तु कारयेत् । एतेन नित्यश्राद्धम् । वायसबलिमात्रन्तु तस्य श्राद्धोत्तरकर्मेति। अन्यथा श्राद्धोत्तरकाले वैश्वदेवानुष्ठाने दोषन्तु पैठनसिराह-

पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद् भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥

एतत् कल्पतरुकारादिभिर्नादृतम् । तदुक्तं स्मृत्यन्तरे-

यदा श्राद्धं पितुः कश्चिद्दातुमिच्छति मानवः ।
वैश्वदेवं ततः कुर्यान्निवृत्ते श्राद्धकर्मणि ॥
वैश्वदेवं न कुर्वीत श्राद्धादौ क्रियते यदि ।
हविर्देवाः न गृह्णन्ति कव्यादिपितरस्तथा ॥
वैश्वदेवं प्रकुर्वन्ति कृताग्नौ करणं यदि ।
लौकिकाग्नौ हुतः पाकः पितृणां नोपतिष्ठते ॥

कार्ष्णाजिनिरपि-

अकृत्वा पैतृकं श्राद्धं वैश्वदेवं करोति यः ।
आसुरं तद् भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥

---

८९. पितृयज्ञ इति- पितृयज्ञस्तु तर्पणमिति ॥ म.स्मृ. ३/७० । कुल्लूकः- अन्नाद्येनोदकेन वा इति (म.स्मृ. ३/८२) तर्पणं वक्ष्यति, स पितृयज्ञः । म.स्मृ. पृ.- ११७ ।

त्रिपुरुषं श्राद्धमेकोद्दिष्टञ्च प्रकृत्या नियमः । अनुज्ञाप्यगृहान् बालवृद्धांश्च भुञ्जीत परितस्य भुञ्जीत, गृहान् गृह्योक्तकर्मदेवान् इत्यर्थः । स्मृत्यन्तरे बृद्धादौ क्षये चान्ते इति । तथा-

गृहाग्निः शिशुदेवानां यतीनां ब्रह्मचारिणाम् ।
पितृपाको न दातव्यो यावत्पिण्डं न निर्वपेत् ॥

स्मृत्यन्तरानुसारात् श्राद्धोत्तरमेव वैश्वदेवं कार्यम् । तदुक्तं मनुना-

उच्छेषणं तु यत्तिष्ठेत् यावद्विप्रा विसर्जिताः ।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥

ततो गृहबलिमिति-

गृहबलिशब्दो भूतयज्ञं विधाय वैश्वदेवादिमहायज्ञलक्षणपरः ।

आदित्यपुराणे-

पितॄन् संतर्प्य विधिवद् बलिं दद्याद् विधानतः ।
वैश्वदेवं ततः कुर्यात् पश्चात् ब्राह्मणभोजनम् ॥

तत्र कल्पतरुकाराद्यैरुक्तम् । अतः श्रुत्योर्विरोधे तूभयोः प्रमाणम् । अतएव मनुः-

श्रुतिद्वैधन्तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ॥

तथोक्तं स्मृतिना तुल्यबलत्वे विकल्पः । तथापि वंशसमाचारात् व्यवस्थायां यो यथा करोति तथा कार्यमिति ।

## अथाग्नौकरणनिर्णयः

तत्र मार्कण्डेयः-

आहिताग्निस्तु जुहुयाताद्दक्षिणाग्निः समाहितः ॥

अनाहिताग्निश्चौपासनेऽग्न्यभावे द्विजेऽस्तु वा । ब्राह्मणाभावेऽप्सु जले होमः । द्विजपाणौ होमपक्षे पुनः छान्दोगपरिशिष्टे-

पित्र्ये यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निकः ।
हुत्वा मन्त्रवदन्येषां तूर्ष्णीं पात्रेषु निक्षिपेत् ॥

पाणौ हुतं यदन्नं तत् पृथगन्नं विकीर्णपात्रं प्रकल्पितेनान्नेन मिश्रयित्वाश्नाति कुत्रचित् । कालादर्शे-

पाणौ हुतं यदन्नं तत् पृथग् नाश्नाति कुत्रचित् ॥

तथा च गुह्यकारः-

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥
यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥

यत्तु कात्यायनवचनञ्च-

साग्निकोऽग्निमुखे दद्यान्निरग्निर्दिजहस्तके ।
अपसव्यन्तु दातव्यं कव्यसोमाहुतिर्द्वयम् ॥
हस्ते हुतं यदश्नीयाद्ब्राह्मणो ज्ञानदुर्बलः ।
नष्टं भवति तच्छ्राद्धमिति तत् पृथगाशनम् ॥

निषेधपरमिति कालादर्शकारः[१०] ।

## अथ श्राद्धाधिकारिणः

तत्र मरीचिः-

मृते पितरि पुत्रेण क्रिया कार्या विधानतः ।
बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः ॥
सर्वस्यानुमतिं कृत्वा ज्येष्ठे नैव तु यत् कृतम् ।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥
[११]नवश्राद्धे सपिण्डञ्च श्राद्धान्यपि च षोडशः ।
एकेनैव तु कार्याणि सविभक्तधनेष्वपि ॥

इति विज्ञानेश्वरः । लघुहारीतोऽपि-

सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोडशः ।
एकपाकेन वसतां ऋषिदैवद्विजार्च्चनम् ॥

---

१०. अग्नौकरणशेषान्तु पित्र्येऽपि प्रतिपादयेत् ।
प्रतिपाद्य पितृणान्तु न दद्याद् वैश्वदेविके ॥-इति अधिकपाठः ।

११. नवश्राद्धमिति-
प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते ॥
- इति मिताक्षरायां या.स्मृ. १/२५२ ।

पृथक् नैव सुताः कुर्युः पृथक् द्रव्या अपि क्वचित् ॥

तथा च व्यासः-

अर्वाग् संवत्सरो ज्येष्ठः श्राद्धं कुर्यात् समेषु च ।
ऊर्ध्वं सपिण्डीकरणं सर्वे कुर्युः पृतक् पृथक् ॥

अतएव बृहस्पतिः-

एकपाके निवसतां पितृदेवद्विजार्च्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे ॥
एवं सह वसेर्युवा पृथग् वा धर्मकाङ्क्षया ।
पृथग् विवर्द्धते धर्मस्तस्माद्धर्म्याः पृथक् क्रियाः ॥

एतेनाविभक्तानां सपिण्डनादूर्ध्वं पृथक् पाकाभावे पृथगनुष्ठाने धर्मसिद्धिः। पितामहमरेण विशेषमाह छन्दोगपपरिशिष्टे-

पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति ।
पौत्रेणैकादशाहादि कर्त्तव्यं [१२]श्राद्धषोडशम् ॥
नैतत् पौत्रेण कर्त्तव्यं पुत्रवांश्चेत्पितामह ॥

अयमर्थः- यदि पितृमरणात् पश्चात् पितामहमरणं स्यात्तदा पौत्रेणैकादशाहादि षोडशश्राद्धं कर्त्तव्यम्। विष्णुपुराणे-

पुत्रः पौत्रः प्रपौत्रो वा तद्वच्च भातृसन्ततिः ।
सपिण्डसन्ततिर्वापि क्रियार्हो नृप जायते ॥

बृहस्पतिः-

प्रमृतस्य पितुः पुत्रैर्देयं श्राद्धं प्रयत्नतः ।
ज्ञातिबन्धुसुहृच्छिषैः ऋत्विक्भृत्यपुरोहितैः ॥

---

१२. षोडशग्रहणमेकोद्दिष्टोपलक्षणार्थमिति पराशरमाधवीये- पृ.- ७९० । पितामहपौत्रशब्दः प्रपितामह प्रपौत्रादि उपलक्षणम् । षोडशशब्दस्य षोडशके लक्षणा । इति कालसारः- पृ.- ३३० ।
षोडशश्राद्धानि जातुकर्ण्येनोक्तानि-
द्वादशप्रतिमास्यानि आद्यषाण्मासिके तथा ।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश ॥
-इति पराशरमाधवीये, पृ.- ७७० ।

स्मृत्यन्तरे-

भ्राता वा भ्रातृपुत्रश्च भागिनेयोऽथ विट्पतिः ।
दौहित्राश्चैव शिष्यश्च षडेते पिण्डदाः स्मृताः ॥

मार्कण्डेयपुराणे-

सर्वाभावे स्वयं पत्न्यः स्वभर्त्तृणाममन्त्रकम् ॥

अथ औरसपुत्रो नोपनीतोऽपि मातापित्रोः और्ध्वदेहिककरणे विशेषः

मनुः- नह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।
नाभिव्याहरयेद् ब्रह्म स्वधानिनयनादृते ॥

स्वधानिनयनम्= प्रेतकर्म ।

सुमन्तुरपि-

नाभिव्याहरयेद् ब्रह्म यावन्नमौञ्जीबन्धनम् ।
मन्त्रैरनुपनीतोऽपि पचेदेकैक एव वा ॥
अनुपनीतोऽपि कुर्वीत मन्त्रवत् पितृमेधिकम् ।
यद्यसौ कृतचूडः स्याद् यदि स्यात्तु त्रिवत्सरः ॥

नह्यस्मिन् युजयत इति यन्मनुवचनम् । नाभिव्याहरयेदिति यत् सुमन्तुवचनं तृतीयवर्षकृतचूडविषयम् । कालादर्शे-

कुर्यादनुपनीतोऽपि श्राद्धमेकोऽपि यः सुतः ।
पितृयज्ञाहुतिः पाणौ जुहुयान्मन्त्रपूर्वकम् ॥

तदपि कृतचूडविषयमिति ।

## अथ पार्वणेकोद्दिष्टयोः श्राद्धक्रमनिर्णयः

तत्र जाबालिः-

कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च ।
स्वधाकारं प्रकुर्वीत वाक्योच्चारं न कारयेत् ॥

व्याघ्रवचनम्-

कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत् ।
उदाहरेत् स्वधाकारं न तु वेदक्षराण्यसौ ॥

संग्रहकारवचनम्-

तद्द्वयं प्रथमवर्षकृतचूडविषयम् ॥

जाबालिः-

यदेकत्रोभयत्रापि एकोद्दिष्टश्च पार्वणम् ।
पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत् ॥

[९३]पार्वणममावास्याविहितम्, एकोद्दिष्टं पितृ यदि सांवत्सरिकश्च । मातुः पितुः सांवत्सरिकं तस्य पृथगनुष्ठानाभावात्तथा च गार्ग्यः-

पर्वकालो मृताहश्च यदेकत्र द्वयं भवेत् ।
पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदा च न ॥

एकोद्दिष्टमत्र पितुः सांवत्सरिकम् । तथा-

ये मृता दर्शकाले तु तेषां पार्वणवत् सदा ।
पुत्रः श्राद्धद्वयं कुर्याद् वर्षश्राद्धविधिः स्मृतः ॥

दर्शे यदि जननीमृताहस्तदा पार्वणश्राद्धं कृत्वा मातृमृताहश्राद्धं कर्त्तव्यमित्यर्थः । यत्र मृताहे पार्वणं कुर्वन्नधोयाति च मानव इति मत्स्यपुराणाद्युक्तं तदमावास्यायाः प्रेतपक्षे मृताहव्यतिरिक्तविषयपरम्।

अमावास्या क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
पार्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदा च न ॥

इति शङ्खस्मरणात् ।

## अथ एकदिने बहुश्राद्धनिर्णयः

तत्र दक्षः-

नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कस्यचित् ।
न यज्ञं न बलिश्चैव देवर्षिपितृतर्पणम् ॥

एककर्त्ता एकदिने एकस्येव पित्रादिमुद्दिश्य श्राद्धद्वयं न कुर्यात् । नैमित्तिकं श्राद्धं कर्त्तव्यमेव । तत्र जाबालिः-

श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने ।
नैमित्तिकं तु कर्त्तव्यं निमितानुक्रमोदये ॥
श्राद्धं कृत्वा तु पुनः श्राद्धं न कुर्यादेकवासरे ।
यदि नैमित्तिकं न स्यान्नैकोद्दिष्टं भवेत् यदि ॥

---

९३. अमावास्यायां पिण्डपितृयज्ञानन्तरं यद्विहितं तत् पार्वणमिति विज्ञानेश्वरः ।
या.स्मृ. १/२३७ ।

सत्यं यस्यैव करणं तस्यैव करणं पुनः पुनः करणमनुचितम् । नैकः श्राद्धद्वयं कुर्यादिति पार्वणकाम्ये च नित्यं पितृसांवत्सरादिकं काम्यश्चापरपक्षादिकं कर्त्तव्यम्, नैमित्तिके नित्यं नैमित्तिकश्च कर्त्तव्यमिति व्यवस्था । नैकः श्राद्धद्वयं कुर्यादिति जाबालिवचनेन त्रिपुरुषस्यैव निषेधः । न तु षट्पुरुषादिकं श्राद्धम् । नैमित्तिकं जातकर्मादिविहितं सांवत्सरिकश्चेति ।

## अथ संघातमरणे श्राद्धानुक्रमः

तत्र बृहस्पतिः-

एकाहनि निविष्टानां बहूनामथवा द्वयोः ।
तन्त्रेण श्रपणं कृत्वा पृथक् पात्रं प्रकल्पयेत् ॥
कृत्वा पूर्वमृतस्यादौ द्वितीयस्य ततः परः ।
तृतीयस्य ततः कार्यं सन्निपाते त्वयं क्रमः ॥

सन्निपाते एकोद्दिष्टानामिति शेषः । यदा जले वा गृहदाहादिना एकसमये एव बहूनां मरणं तदा स्वजन्यसन्निधानक्रमः । एतच्च मातापित्रोर्मरणमन्तरेणान्येषामिति वोद्धव्यम् । पित्रोः संघातकरणे विणेषमाह कालादर्शे-

पित्रोः संघातकरणे मातुरन्यत्र वा दिने ।
अनुयानमृते श्राद्धं यथाकालं समाचरेत् ॥

पित्रोः= मातापित्रोः । मातापितामरणादिनादुत्तरदिने पितानुगमनमरणे यथाकालं तदा दशाहे सपिण्ड्यं कुर्यात् । तदाह देवलः-

पित्रोरुपरमे पुत्राः क्रियां कुर्युर्द्वयोरपि ।
अनुमृतौ तु नान्येषां संघातकरणेऽपि च ॥

## अथ विघ्नितश्राद्धकालनिर्णयः

ऋष्यशृङ्गः-

आब्दिके चैव संप्राप्ते [९४]अशौचं यदि जायते ।

९४.अशौचशब्देन च कालस्नानाद्यपनोद्यः पिण्डोदकदानादिविधेः अध्ययनादिपर्युदासस्य च निमित्तभूतः पुरुषगतः कश्चनातिशयः कथ्यते । इति मिताक्षरा- या.स्मृ.प्रा.अ. अशौचप्रकरणम् । श्लो.- १ ।

आशौचे तु व्यतीते वै तेषां श्राद्धं प्रदीयते ॥
शुचिभूतेन दातव्यो या तिथिः प्रतिपद्यते ।
सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदा च न ॥

तत्रासम्भवे गोभिलः-

देये प्रत्याब्दिके श्राद्धे त्वन्तरा [९५]मृतसूतके ।
अशौचानन्तरे कुर्यात्तन्मासे तु क्षयेऽपि वा ॥
श्राद्धविघ्ने समुत्पन्ने मृते रजसि सूतके ।
वदन्ति शुद्धौ तत्कार्यं दर्शे वाऽपि मनीषिणः ॥
अपत्नीकप्रवासी च यस्य भार्या रजस्वला ।
आमश्राद्धं द्विजः कुर्यात् शूद्रः कुर्यात् सदैव हि ॥

लघुहारीतः-

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम् ।
अमावास्यादिनियतं माससंवत्सरादृते ॥
श्राद्धे यज्ञे तथोद्बाहे मृते रजसि सूतके ।
तत्राशुद्धं न कुर्वीत यावत् कर्मसमाहितम् ॥
प्रारम्भो वरणं यज्ञे सङ्कल्पव्रतदानयोः ।
नान्दीमुखं विवाहादौ श्राद्धादौ च परिक्रिया ॥

## अथ चन्द्रसूर्यग्रहणप्रत्याब्दिकनिर्णयः

गोभिलः-

दर्शे [९६]रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थिते ।
अन्नेनासम्भवे हेम्ना कुर्यादामेन वा सुतः ॥

यदा अमावास्यायां रविग्रहणे प्रात्याब्दिके नान्नेन कर्त्तुं शक्यते आमेन हेम्ना वा तदा कुर्यात् । एवं चन्द्रग्रहणेऽपि । मार्कण्डेयः-

---

९५. सूतकमिति- 'जननिमित्तमस्पृश्यत्वलक्षणमाशौचम्' इति विज्ञानेश्वरः ।
-या.स्मृ. ३/१९, पृ.- ३३६ ।

९६. पूर्णिमाप्रतिपत् सन्धौ राहुः सम्पूर्णमण्डलम् ।
ग्रसते चन्द्रमर्कश्च दर्शप्रतिपदन्तरे ॥
वृद्धगार्ग्य इति कालमाधवोक्तद्धृतवाक्यमिति । का.मा.-पृ.- २८४ ।

रात्रेरपरभागे तु शशिनो ग्रहणं यदि ।

प्रातरेव तदा स्नानमिति ।

चन्द्रग्रहणे तु यामं स्त्रीनिति विशिष्टवचनात् माधवीये-

ग्रहादिव्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः ।

कुतपादयथाप्यर्वागासनं कुतपे भवेत् ॥

आदिशब्देन संक्रान्तिपरः[१७] । एवं ग्रासास्तमिते चन्द्रे यावत् सोमोदयस्तदा स्नायात्तव देव हि इति अशननिषेधादत्रापि ब्राह्मणाभावे हेम्नाऽऽमेन वा कुर्यात् । तदाह बौद्धायनः-

अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।

हेमश्राद्धं संग्रहे च द्विजश्राद्धं समाचरेत् ॥

## अथ ब्राह्मणभोजनपिण्डदानयोस्तु प्राधान्यविचारः

इदमत्र विचार्यते कि ब्राह्मणभोजनं प्रधानं तत्र पिण्डदानमुभयं वा । ब्राह्मणभोजनं प्रधानं पिण्डदानाङ्गमिति गोविन्दराजः[१८] । यथाह मनुः-

एकैकमपि विद्वांसं दैवे पैत्र्ये च भोजयेत् ।

पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि ॥

इति पिण्डदानमन्त्रेणापि युगादौ श्राद्धविधानाच्च यद्येकं भोजयेत् श्राद्धे इति ब्राह्मणभोजनासम्भवाच्च पित्रादौ पिण्डमात्रं दद्यात् । अशक्तौ पिण्डदानमात्रमाह निगमः-

आहिताग्नेः पित्रर्च्चनं पिण्डैरेव ॥

---

१७. संक्रान्तिपर इति- मण्डलनेमिमध्यं केन्द्रः, तस्य पूर्वराशिसंबन्धत्यागेनोत्तरराशि-प्रवेशः संक्रान्तिः तत्कालश्चातिसूक्ष्म इति तत्रैकस्याननुष्ठाने प्रसक्ते तद्योग्यतया तत्सन्निहितः पूर्वोत्तरः कालो ग्राह्यः । स च यावता कालेन केन्द्रपूर्वापरौ भागावुत्तरराशिचक्रं प्रविशतस्तावान् । स एव भोगः पञ्चदशनाडीरूपः ॥

-नि.सि.टि.- पृ.- ३ ।

१८. ब्राह्मणस्य भोजनमत्र प्रधानं पिण्डदानादि तु अङ्गमित्यवसीयतेति गोविन्दराजभाष्ये पाठः । म.स्मृ. ३/१२९ ।

स्मृत्यन्तरे-

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ॥

तथापि प्रकरणाधिकरणन्यायेन ब्राह्मणभोजनं प्रधानम् । पिण्डदानमङ्गम्। अङ्गेप्यङ्ग [९९]श्रुतिरर्थवाद एव । पिण्डदानमात्रविधिस्तु.अङ्गभूतपिण्ड-दानात् कर्मान्तरमेव । इति श्राद्धविवेककारः ।

## अथ जीवत्पितृकश्राद्धनिर्णयः

तत्र कात्यायनः-

स्वपितुः पितृकृत्येषु ह्यधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिदद्यादिति श्रुतिः ॥

स्वपितुरिति सह पित्रा यो वर्त्तते तस्य स्वपितुः विद्यमानपितृकस्येत्यर्थः। क्रतुः-

अष्टकादिषु संक्रान्तौ मन्वादिषु युगादिषु ।
चन्द्रसूर्यग्रहे पाते स्वेच्छया लभ्ययोगतः ॥
जीवत्पिता नैव कुर्यात् श्राद्धं काम्यं तथाखिलम् ॥
दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैस्तर्पणमेव च ॥

स्मृत्यन्तरे-

गयायानं कुहूश्राद्धं तिलताम्रैश्च तर्पणम् ।
न जीवत् पितृकः कुर्यात् कुर्वस्तु पितृहा भवेत् ॥

मरीचिः-

जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् ।
येषां वाऽपि पिता कुर्यात्तेषामेकं प्रचक्षते ॥

---

९९. अर्थवाद इति - प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः । तस्य च लक्षणया प्रयोजनवदर्थपर्यवसानम् । तथा हि- अर्थवादवाक्यं हि स्वार्थप्रतिपादने प्रयोजनाभावाद् विधेयनिषेधयोः प्राशस्त्यनिन्दितत्वे लक्षणया प्रतिपादयति । स्वार्थमात्रपरत्वे प्रयोजनाभावादानर्थक्यप्रसङ्गात् । आम्नायस्य हि क्रियार्थत्वात्। न चेष्टापत्तिः । अर्थसंग्रहः, अर्थवादप्रकरणम्- पृ.- २१० ।

## अथ आमश्राद्धम्

तत्र जाबालिः-

आमश्राद्धप्रदोऽनग्निः सर्वमेव मनीषिणः ।
तेनाग्नौकरणं कुर्यात् पिण्डांस्तेनैव निर्वपेत् ॥

अत्रेदं तात्पर्यम् । तत्र कल्पतरुः- सर्वत्रैवामावास्यादौ श्राद्धमिहोपस्थिते अनग्निरामश्राद्धं कूर्यात् । अनुपनीत- भार्याविरहितानां पाकश्राद्धाभिधानात् । तथा च मत्स्यपुराणे-

एतच्चानुपनीतोऽपि कुर्यात् सर्वेषु कर्मसु ।
श्राद्धं साधारणं नाम सर्वकालसुखप्रदम् ॥
भार्याविरहितोप्येतत् प्रवासस्थोऽपि नित्यशः ।
शूद्रोऽप्यमन्त्रवत् कुर्यादनेन विधिना बुधः ॥

गालवोऽपि-

तीर्थेऽनग्नावापदि च देशभङ्गे रजस्थापि ।
आमश्राद्धं द्विजः कुर्यात् शूद्रः कुर्यात् सदैव हि ॥

एतच्च हेमश्राद्धविधानम् । माससंवत्सरादृते इति हारीतवचनात् ।

## अथ पुत्रिकापुत्रश्राद्धम्

तत्र कल्पतरुः- शङ्खलिखितावपि ।[१००]पुत्रिकां हि पुत्रीं वदन्ति । तस्याः पुत्रः पुत्रिकापुत्रः । मातामहपितामहानां पिण्डदः । पुत्रदौदित्र-निर्विशेषोऽस्ति । अत्र ग्रहणे मातामहपितामहानामपि वर्षद्वयोपलक्षणम्। पुत्रदौहित्रयोरौरसपुत्रयोः पुत्रिकापुत्रयोरत्र च । अत्र ग्रहणे नरकात्तारणादिरूपः । मनुः-

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥

दौहित्रोऽत्र पुत्रिकासुतः । पितुर्जननीपितुर्मातामहस्येति यावत् ।

मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः ।
द्वितीयन्तु पितुस्तस्याः तृतीयन्तु पितुः पितुः ॥

---

१००. पुत्रिकापुत्रवदिति प्रचेतसस्तस्या अपत्यं पुत्रिकासुतो मातामहपितामहानां पिण्डदः । पुत्रदौहित्रयोर्न विशेषोऽस्त्यनुग्रहे ।

## अथ द्विपुत्रिकश्राद्धम्

तत्र हारीतः- न बीजं न क्षेत्रं फलति नाक्षेत्रं बीजं रोपयत्युभय-दर्शनादुभयोरपत्यम् । तेषामुत्पादयिता प्रथमः प्रथमप्रवरो भवति । द्वौ द्वौ पिण्डं निर्वाप्य एकपिण्डाद्वाऽनुवर्त्तयेत् ।

## अथ नैमित्तिकश्राद्धम्

तत्र दक्षः-

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ।
तथा तथा हि कर्त्तव्यं न कालस्तु विधीयते ॥

शिवराघवसंवादे-

नैमित्तिकेषु श्राद्धेषु न कालनियमः स्मृतः ।

यथा- ग्रहादिव्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः ।
कुतपादयवाऽप्यर्वागासनं कुतपे भवेत् ॥

आदिशब्देन संक्रान्त्यादिनिमित्तमुच्यते । तत्र स्कन्दपुराणे-

यो यस्य विहितः कालः कर्मणस्तदुपक्रमः ।
विद्यमाने भवेदङ्गे नोच्छ्रितोपक्रमेण तु ॥

यदा सायंकाले त्रिचतुर्घटिका विशेषे मकरसंक्रान्तौ जातायां संक्रान्तिनिमित्ते श्राद्धं क्रियमाणे भुञ्जानानां विप्राणां सन्ध्याकाले प्राप्ते च भोक्तव्यमेव । विप्रैर्नास्ति सन्ध्यादिभोजने निषेधः । इत्यनन्तभट्टीकारः । तथा आपस्तम्बः-

न च नक्तं श्राद्धं कुर्वीत ॥
आरब्धे चाभोजनमासमापनात् ॥

अत्रिः- पूर्वाह्णे वै भवेद्बृद्धिर्विना जन्मनिमित्तकम् ।
पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः ॥
प्रादुर्भावे सुपुत्रे तु ग्रहणे चन्द्रसूर्ययोः ।
स्नानान्तरमात्मीयान् वै पितृन् श्राद्धेन तर्पयेत् ॥

पूर्वाह्णे वै भवेद् बृद्धिरिति वचनाद्रात्रौ विवाहे यदा प्रातःकाले न कर्त्तव्यं तदा रात्रावपि न कर्त्तव्यम् । तेनासम्भवे दिवसस्य भागान्तरेऽपि वृद्धिश्राद्धं कर्त्तव्यमपि श्राद्धविवेककारः ।

मत्स्यपुराणे-

तीर्थे द्रव्येऽपगतौ तु न कालमवधारयेत् ।
पात्रञ्च ब्राह्मणं पाद्य सन्धौ श्राद्धं विधीयते ॥

तीर्थम्= नारायणस्यादि । द्रव्यम्= खड्गमाषादि ।

देवीपुराणे-

अकालोऽप्यथवा काले तीर्थे श्राद्धं सदा नरैः ।
प्राप्तैरेव तथा कार्यं कर्त्तव्यं पितृतर्पणम् ॥

तीर्थप्राप्तिविषयमिदम् । स्मृत्यन्तरे-

कीर्त्तनाच्चैव तीर्थस्य स्नात्वा च पितृतर्पणम् ।
नाशं व्रजन्ति पापानि तेषु तीर्थेषु यः पुमान् ॥
ध्वनन्ति पापं तीर्थेषु ते प्रयान्ति सुखं दिनम् ॥

## अथ गृहपाकपरित्यागनिर्णयः

तत्र प्रचेताः-

काम्यव्रते च यज्ञे च पितृणाञ्चैव वत्सरे ।
महोत्सवे व्यतीपाते पूर्वपाकं परित्यजेत् ॥

स्मृतिसमुच्चये-

काम्यव्रते तथा यज्ञे भावदुष्टं यदा भवेत् ।
सूतके मृतके चैव पूर्वपाकं परित्यजेत् ॥

स्मृतिसारे च-

विवाहोत्सवयज्ञेषु मातापित्रो मृतेऽहनि ।
गृहमृते प्रसूते च पूर्वपाकं परित्यजेत् ॥

## अथ श्राद्धसङ्कल्पनिर्णयः

तत्र स्मृत्यन्तरे-

आरम्भेत्तु नवैः पाकैरनारम्भाच्च बान्धवैः ।

प्रेतकृत्ये केचित् पठन्ति-

त्रिपक्षे चाथ षण्मासे सपिण्डीकरणे तथा ।
पूर्वपाकं परित्यज्य मृताहे द्वादशाहनि ॥

## अथ ज्येष्ठपुत्रस्य क्षौरनियमः

ज्योतिःशास्त्रे

ज्येष्ठे मासि तथा मार्गे क्षौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोर्वा यत्नतः परिवर्जयेत् ॥

रत्नमालायाम्-

आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठे मासि नहि पाणिपीडनम् ॥

सौरो मासो विवाहादौ इति वचनात् सौरो मानो वेति । गर्भिणीपतेर्विशेषः तत्र स्मृतिः-

दहनं वहनश्चैव वपनं सिन्धुमज्जनम् ।
पर्वतारोहणं चैव न कुर्याद् गर्भिणीपतिः[१०१] ॥
नोद्यानतोऽम्भसि स्नायान्न च श्मश्र्वादिकर्त्तनम् ।
अन्तर्वत्याः पतिः कुर्वन्न प्रजा भवति ध्रुवम्[१०२] ॥

तद्विहितेतरविषयमेवेति विद्याकरः । स्मृतिः-

आधानपर्वदीक्षासु प्रायश्चित्ते गुरोर्मृते ।
सन्न्यासे यज्ञकाले च सप्तभिर्वपनं स्मृतम् ॥

गङ्गायां भास्करे क्षेत्रे गयायाञ्च मुण्डनं सर्वकेशवपनमिति विद्याकरः । गुरोः= मातापित्रोः । तथा चानन्तभट्टीये-

गयायां भास्करे क्षेत्रे मातापित्रोर्मृतेऽहनि ।
आधानकाले सोमे च सप्तसु वपनं स्मृतम् ॥

## अथ व्रतादौ अशुद्धकालनिरूपणम्

तत्र बृहद्वसिष्ठबृहस्पतिः-

बाले वा यदि वा बुद्धे शुक्रे वाऽस्तं गते गुरौ ।

---

१०१. दहनं वपनश्चैव चौलं वै गिरिरोहणम् ।
नाव आरोहणश्चैव न कुर्याद् गर्भिणीपतिः ॥
-रत्नसंग्रहे गालव इति नि.सि.- पृ.- १७९ ।

१०२. उदन्वतोऽम्भसि स्नानं नखवेशादिकर्त्तनम् ।
अन्तवत्न्याः पतिः कुर्यान्न प्रजा जायते ध्रुवम् ॥
-इति नि.सि.- पृ.- १७८ ।

मलमास इवैतानि वर्जयेद् देवदर्शनम् ॥

वृद्धगार्ग्यः-

नामान्न प्राशनं चौलं विवाहं मौञ्जीबन्धनम् ।
अस्तगे च गुरौ शुक्रे बाले वृद्धे मलिम्लुचे ॥

मात्स्ये-आधानं यज्ञकर्माणि प्रायश्चित्तव्रतानि च ।
न कुर्यान्मलमासेऽपि शुक्रगुर्वोरुपप्लवे ॥

उपप्लवः= अस्तमयः ।

च्यवनः-

यात्राक्षौरविवाहादौ व्रतकरणं कर्णवेधमथविधाम् ।
कुर्यान्न जन्ममासे ह्यस्तमिते रवौ शशाङ्के च ॥

गार्ग्यः- विवाहं देवयात्राञ्च गृहकर्मप्रवेशनम् ।
व्रतोपनयनञ्चैव नष्टशुक्रे न कारयेत् ॥
गुरावस्तं गते वर्ज्याः प्रतिष्ठोद्‌वाहमेखलाः ।
गृहारम्भप्रवेशौ च चूडा एव षडेव तु ॥
अनादि देवतां दृष्ट्वा शुचः स्युः नष्टभार्गवे ।
मलमासेऽप्यनावृत्ततीर्थयात्रां विवर्जयेत् ॥

शतानन्दसंग्रहे-

अस्तं गते देवगुरौ भृगौ च क्षीणे,
तथोदयगतेऽपि च धूमकेतौ ।
उद्‌बाहचूडोपनयप्रतिष्ठा,
धर्मप्रवेशकारणञ्च विनाशहेतुः ॥

भगवतीपुराणे-

सिंहसंस्थे गुरौ शुक्रे सर्वारम्भं विवर्जयेत् ।
प्रारब्धं न च सिध्येत महामयङ्करं भवेत् ॥

अत्र प्रारब्धारम्भशब्दे पादानामारम्भस्यैव प्रतिषेधो न तु आरब्धस्य नापि उद्यापनस्य । तदुक्तं वायुपुराणे-

आदिमध्यावसानेषु कालशुद्धिर्यदा भवेत् ।
नियमो नास्त्यतो राजन् प्रतिष्ठाकरणं प्रति ॥

काश्यपसंहितायाम्-

ऋक्षैकमन्दिरगतौ यदि जीवभानू
शुक्रोऽस्तगः सुखरैकगुरौ च सिहे ।
आरभ्यते व्रतविवाहगृहप्रतिष्ठा-
क्षौरादिकर्मं गमनागमनश्च धीरैः ॥

प्रतिष्ठाशब्दोऽपि चानन्तदेवकुलदेवप्रतिमादिप्रतिष्ठानिषेधपरमेव । तथा च माण्डव्यश्रुतिः-

वेदव्रतचूडानवग्रहयज्ञप्रतिष्ठार्घ्याः ।
रविभुवनस्थे जीवे कार्या वर्ज्यो विवाहस्तु ॥

अत्र कालशौचे व्रतारम्भो दशमासिकः । द्वादशेषु मासेषु कार्यमित्यर्थः।

ज्योतिःशास्त्रे-

सिंहस्थं मकरस्थश्च गुरुं यत्नेन वर्जयेत् ।
सिंहस्थे तु मघासिंहे गुरुं यत्नेन वर्जयेत् ॥

सिंहभोगे तु विवाहो विधीयते ।

नर्मदा पूर्वभागे तु शोणस्योत्तरदक्षिणे ।
गण्डुक्याः पश्चिमे पारे मकरस्थो न दोषभाग् ॥

राजमार्त्तण्डे-

सिंहे यदा तिष्ठति देवपूज्यः पापं तदा वत्सरमादिशन्ति ।
वैधव्यमाप्नोत्यचिरेण कन्याप्युद्वाहिता स्याद् यदि सा धवेन॥

शतानन्दसंग्रहे-

मघेन यदि माघस्यान्महामाघः स उच्यते ।
यज्ञोद्बाहौ न कुर्वीत यावत् सिंहगतो गुरुः ॥
मघेन माघो यदि पौर्णमास्यां तस्यां तिथौ सिंहगते च जीवे ।
नोद्बाहकर्मोत्तरभागचापि समाचरेद् याम्यदिशि प्रशस्तम् ॥
महामाघे विवाहो न मृगगे सिंहगे गुरौ ।
विवाहवर्ज्यकर्माणि कुर्यादिति वचः शृणु ॥
श्रुतिवेधव्रतवनितानवगतिदेवजयप्रतिष्ठाद्याः ।
रविभवनस्थे जीवे कार्या नार्या विवाहश्च ॥

इति केचित् पठन्ति । श्रुतिबेधव्रतचूडानवगृहदेवालयप्रतिष्ठाद्या इति। एतद् दाक्षिणात्यविषयपरम् । राजमार्त्तण्डे-

यात्राचूडा विवाहश्रुतिवेधवनितासङ्गसद्मप्रवेशः
प्रासादोद्यानहर्म्यामरनरभवनाम्भविद्याप्रदानम् ।
मोञ्जीबन्धप्रतिष्ठामणिकनकशिरो धारणं कुर्वते यः
मृत्युतेषां च सिहे गुरुदिनकरयोरेकराशिस्थयोश्च ॥

ज्योतिःसारसमुच्चये-

विवाहचूडाव्रतकर्णवेधक्षौरप्रतिष्ठादिगृहप्रवेशाः ।
सुवर्णशय्याद्युपभोगाविद्याः सिंहे सुरेज्ये न च शोभनाश्च ॥

## अथ लुप्तसंवत्सरनिर्णयः

ज्योतिःसारे-

अतिचारगते जीवे तद्राशिं नैति चेत् पुनः ।
लुप्तसंवत्सरो ज्ञेयः सर्वकर्मबहिष्कृतः ॥

## अथ शुक्रबृहस्पत्योर्म्लौच्यादिनिरूपणम्

तत्र कालादर्शे-

मिहिरेण सहात्यन्तं सन्निकर्षो बृहस्पतेः ।
कवेश्च दर्शनं यत्तु म्लौच्यमाहु महर्षयः ॥

तथा च ब्रह्मसिद्धान्ते-

रविणासत्तिरन्येषां ग्रहाणामस्त्यमुच्यते ।
अर्वाक् शुद्धिमधस्तात् स्यान्म्लौच्यादुर्द्धन्तु शैशवः ॥

ज्योतिःसारसमुच्चये-

बाले शुक्रे वृद्धे शुक्रे जीवे नष्टे जीवे वृद्धे।
वाले जीवे सिंहे जीवे सिंहादित्ये जीवादित्ये ॥
तथा मलिम्लुचे मासि सुराचार्येऽचारगे ।
वापीकूपविवाहादि क्रिया च दूरतस्त्यजेत् ॥

शतानन्दसंग्रहे-

कुजशुक्रबुधार्काणां फलं वक्रातिचारगम् ।
बृहस्पतेस्तु तन्नास्ति पूर्वराशिगतं फलम् ॥

बालबृद्धकालोक्तं राजमार्त्तण्डे-

बालोदशाहद्युदिताः परेण पूर्वेण बालो दिवसत्रयं स्यात् ।
बृद्धस्तु पूर्वस्य च पक्षमेकं पश्चात् स्थितिः पञ्चदिनानि शुक्रः ॥
प्राक्पश्चादुदयः शुक्रः सप्तपञ्चदिनेषु च ।
विपरीतं तु वृद्धत्वं तद्वदेव गुरावपि ॥

सिद्धान्ते-

भवेत्सन्ध्यागतः पश्चात् अस्तगोऽपि दिनत्रयम् ।
दिनानि पञ्चपूर्वेण तदुक्तं कर्म वर्जयेत् ॥
बाले वृद्धे च सन्ध्यायां चतुः पञ्चत्रिवासरान् ।
जीवे च भार्गवे चैव विवाहादिषु वर्जयेत् ॥

## अथ संवत्सरमध्ये पुत्रदुहिताव्रतविवाहनिर्णयः

तत्र स्मृतिः-

एकोदरप्रसूतनां एकस्मिन्नपि वत्सरे. ।
विवाहो नैव कर्त्तव्यो गार्ग्यस्य वचनं तथा ॥

कालादर्शे-

पुत्रोपनयनादूर्ध्वं षण्मासाभ्यन्तरेषु च ।
पुत्र्योद्बाहं न कुर्वीत विवाहाद् व्रतबन्धनम् ॥
पुत्रोद्बाहात् परं पुत्री विवाहो न ऋतुत्रये ।
पुत्रोद्बाहादेकवर्षे तत्रैका विधवा भवेत् ॥
मुण्डनान्मुण्डनं कार्यं मण्डनान्नैव मुण्डनम् ।
मुण्डनं द्वित्रयेणैव मङ्गले मङ्गलान्तरम् ॥

ज्योतिःशास्त्रे-

न पुंविवाहोर्ध्वऋतुत्रयेण विवाहकार्यं दुहितुश्च यत्नात् ।
न मण्डनाच्चोपरि मुण्डनं स्यात् तन्मुण्डनान्मुण्डनमन्वगेव ॥
विवाहश्चैकजन्यानां षण्मासाभ्यन्तरे यदि ।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥
प्रत्युद्बाहो नैव कार्योऽप्येकस्मिन् दुहितृद्वयम् ।
न चैकजन्मनो पुंसोरेकजन्ये तु कन्यके ॥

न्यूनं कदाचिदुद्वाहो नैकदा मुण्डनद्वयम् ।
पुत्री परिणयादूर्ध्वं यावद्दिनचतुष्टयम् ॥
पुत्रान्तरस्य कुर्वीत नोद्बाहमिति सूरयः ॥

तदुक्तं ज्योतिःशास्त्रे-.

एकोदरे करतलग्रहणं यदि स्या-
देकोदरस्थ वरयोः कुलमेति नाशम् ।
एकाब्दिके तु विधवा भवतीति कन्या
न मन्तरव्यवहितं शुभदं वदन्ति ॥

## अथ गर्भाधानकालः

तत्र गर्भाधानमृताविति याज्ञवल्क्यः । स्त्रीणां गर्भधारण-योग्यावस्था ऋतुरिति विज्ञानेश्वरः[१०३]।

विष्णुपुराणे-

ऋतावुपगमः शस्तः सुपत्न्याः मन्त्रतो द्विजः ॥

मन्त्र इति द्विजातिविषयम् । सकृदेकस्यां रात्रौ न द्विस्त्रिर्वा इति विज्ञानेश्वरः[१०४] ।

## अथ पुंसवनम्

तत्र याज्ञवल्क्यः-

पुंसवनं स्पन्दनादिति[१०५] ।

पारस्करः-

पुंसवनं मासे द्वितीये तृतीये वा ॥

---

१०३. स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः कालऋतुः ॥
- इति मुद्रितमिताक्षरापाठः- या.स्मृ. १/७९ ।

१०४. पुं नक्षत्रे शुभयोगलग्नादिसम्पत्तौ सकृदेकस्यां रात्रौ ।
न द्विस्त्रिर्वा । ततो लक्षणैर्युक्तं पुत्रं जनयति ।
-इति मुद्रितमिताक्षरापाठः- या.स्मृ.-१/८०

१०५. गर्भाधानमृतौ पुंसः सवनं स्पन्दनातपुरा ।
षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च ॥ या.स्मृ.- १/११ ।

## अथ सीमन्तोन्नयनम्

तत्र शतानन्दसंग्रहे-

षष्ठेऽष्टमे तथा मासि सीमन्तोन्नयनं बुधः ।
कुर्यात् प्रथमगर्भे तु नवमे तु वचः शृणु ॥
सीमन्तोन्नयनं पुंसवनवत् प्रथमं गर्भे मासे षष्ठेऽष्टमे वा ॥

गर्भस्पन्दने सीमन्तोन्नयनं यावता न प्रसव इति आश्वलायनगृह्यपरिशिष्टे। सीमन्तोन्नयनं प्रथमे गर्भे स्यात् । सीमन्तोन्नयनं संस्कारः गर्भमात्रसंस्कार इति श्रुतिः ।

पुंसवनसीमन्तोन्नयनयोः क्षेत्रसंस्कारकत्वात्
सकृदेव कार्यम् । न प्रतिगर्भमिति विज्ञानेश्वरः ॥

तथा च देवलः-

सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता ॥

हारीतोऽपि-

सकृच्च कृतसंस्काराः सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत् ॥

अकृतसीमन्तायाः विषये प्रसवे सत्यव्रतोक्तो विशेषः-

स्त्री यदा कृतसीमन्ता प्रसूते च कथञ्चन ।
गृहीतपुत्रा विधिवत् पुनः संस्कारमर्हति ॥

## अथ जातकर्मः

तत्र विष्णुः-[१०६]जातकर्म ततः कुर्यात् पुत्रे जाते यथोदितम् ।

---

१०६. जातकर्मेति- एते आ इते आगते गर्भकोशाज्जाते कुमारे जातकर्म ।
-इति विज्ञानेश्वरः- या.स्मृ. १/१२ ।

जातस्य यत् कर्म मन्त्रवत्सर्पिः प्राशनादिरूपं जातकर्म ।
-इति कुल्लूकः- म.स्मृ. २/२७ ।

मनुः-प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥ २/२९

नाभिच्छेदनात्प्राक् पुरुषस्य जातकर्माख्यः संस्कारः क्रियते । तदा चास्य स्वगृह्योक्तमन्त्रैः स्वर्णमधुघृतानां प्राशनमिति कुल्लूकः ।

यथोदितमिति स्वगृह्योक्तविधिना इत्यर्थः । जाते कुमारे पितृणामामोदात् पुण्यं तदहस्तस्मात्तिलपूर्णानि पात्राणि सहिरण्यानि ब्राह्मणान्नाहूय पितृभ्यः स्वधां कुर्यात् । प्राङ्नाड्याच्छेदनात्संस्कारपुण्यार्थान् कुर्वन्ति । यत्तु विष्णुधर्मोत्तरे-

अच्छिन्ननाभिकर्त्तव्यं श्राद्धं वै पुत्रजन्मनि ॥

यत्तु कल्पतरौ-

न शोष्यति जातकर्म प्रोषितागतकर्मसु ॥ इति ।

अनयोर्विधिनिषेधयोस्तु षोडशीग्रहणाग्रहणवद्विकल्पः ॥

## अथ नामकरणम्

याज्ञवल्क्यः-

अहन्येकादशे नाम[१०७] ।

अशौचे तु व्यतिक्रान्ते नाम कर्म विधीयते ॥

## अथ बहिर्निष्क्रमणम्

चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ॥ इति मन्वादयः ।

यत्तु भविष्यपुराणे-

द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात्[१०८] ॥

---

१०७.नामेति-

नामधेयं दशम्यान्तु द्वादश्यां वाऽस्य कारयेत् ।
पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणन्विते ॥
मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥
शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥ म.स्मृ.-२/३०-३३ ।

१०८. द्वादशेऽहनि राजेन्द्र शिशोर्निष्क्रमणं गृहात् ।
चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥
-इति पराशरमाधवोक्तयमस्मृताविति २ अ. आचारकाण्डे पृ.- ४४२ ।

तच्च शाखाभेदे विकल्प इति लक्ष्मीधरः । अनयोः सूर्यचन्द्रदर्शनयो-राभ्युदयिकं श्राद्धं नास्ति ॥

## अथ अन्नप्राशनम्

षष्ठे अन्नप्राशनं[१०९] मासीति मन्वादयः ।

तत्तु शङ्खलिखितौ-

संवत्सरेऽन्नप्राशनमिति कल्पतरुकारः ॥

## अथ चूडाकरणम्

अत्र मनुः-

[११०]चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥

शङ्खलिखितौ-

तृतीये वर्षे चूडाकरणं पञ्चमे वा ।

याज्ञवल्क्यसांख्यायनौ- यथा कुलधर्मं वा ॥

सुतस्य माता यदि गर्भिणी तदा चूडा निषेधः । तदुक्तं स्मृत्यन्तरे-

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।

---

१०९. अन्नप्राशनमिति यमः-

ततोऽन्नप्राशनं मासि षष्ठे कार्यं यथा विधि ।
अष्टमे वाऽपि कर्त्तव्यं यथेष्टं मङ्गलं कुले ॥ प.मा. पृ.- ४४३

शङ्खोऽपि- संवत्सरेऽन्नप्राशनमर्द्धसंवत्सर इत्येके । प.मा. पृ.- ४४३

लौगाक्षिः- षष्ठे मास्यन्नप्राशनं जातेषु दन्तेषु वा । प.मा. पृ.- ४४३

११०. चूडा इति यमः-

ततः संवत्सरे पूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिदर्शनात् ॥ प.मा. पृ.- ४४४

वैजवापः- तृतीये वर्षे चूडाकरणम् । प.मा. पृ.- ४४४

शङ्खोऽपि- तृतीये वर्षे चूडाकरणं पञ्चमे वा ॥

तत्र ऋषिभेदेन चूडानियममाह लौगाक्षिः- दक्षिणतः कमुजा वसिष्ठानाम् उभयतोऽत्रिकाश्यपानाम्, मुण्डामृगवः, पञ्चचूडाङ्गिरसः । मण्डलार्द्धशिखिनोऽन्ये, यथा कुलधर्मं वा । इति प.मा. पृ.- ४४४ ।

प्राक्पञ्चवत्सरादूर्ध्वं गर्भिण्यामपि कारयेत् ॥
चूडाकृतौ शिशोर्माता गर्भिणी चेत् यदा पुनः ।
कृते गर्भविपत्तिः स्याद् दम्पत्योर्वा सुतस्य वा[१११] ॥

## अथोपनायनम्

तत्र विश्वामित्रयाज्ञवल्क्ये-

गर्भाष्टमेष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥

मनुः- गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥

तत्रापि मनुप्राधान्यात् सर्वस्मृतिकारसम्मतत्वाच्च गर्भाष्टमे गर्भेकादशे गर्भद्वादशे चेति । तद्यथा च मनुः-

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोष्टमे ॥

गर्गः- विप्रं वसन्ते क्षितिपं निदाघे वैश्यं धनान्ते सततं विदध्यात् ।
माघादिशुक्रान्तिकपञ्चमासाः शस्ताः द्विजानामुपनायने च ॥

[११२]उपनयनकालस्य परमावधिगौणकालमाह याज्ञवल्क्यः-

---

१११. उपनायनमिति-

उपनायनमेवोपनायनम् । स्वार्थेऽण् । वृत्तानुसारात्, छान्दोभङ्गात् । आर्षं वा दीर्घत्वम् इति विज्ञानेश्वरः । मिताक्षरा या.स्मृ- १/१४ ।

११२. उपनयनकाल इति आश्वलायनः-

गर्भाष्टमेऽष्टमे वाऽब्दे पञ्चमे सप्तमेऽपि वा ।
द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः ॥ नि.सि. पृ.- १९२

विष्णुः- षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे ।
अष्टमे सर्वकामस्य नवमे कान्तिमिच्छति ॥ नि.सि. पृ.- १९२

ज्वोतिर्निबन्धे-

अग्रजा बाहुजा वैश्याः स्वावधेरुर्ध्वमब्दतः ।
अकृतोपनयाः सर्वे वृषला एव ते स्मृताः ॥ नि.सि. पृ.- १९२

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरान् ।
ब्रह्मक्षत्रविशां कालः औपनायनिक परः ॥

नातः परम् उपनयनकालोऽस्ति । मनुः-

अत ऊर्ध्वं त्रयोप्येते यथाकालमसंस्कृताः ।
सावित्री पतिताव्रात्याभवन्त्यार्यविगर्हिताः ॥

एतेनोक्तपरमावध्यतिक्रमेऽपि व्रात्यस्तोमरूपप्रायश्चित्तानन्तरं संस्कार्य एवेत्यर्थः । स्त्रीणां विवाह एवोपनयनम् । तथा च मनुः-

वैवाहिको विधीस्त्रीणां संस्कारो वैदिकः स्मृतः ॥

## अथ विवाहः

तत्र स्मृतिः राजमार्त्तण्डे मनुः-

वर्षैरेकगुणां भार्यामुद्बहेत् त्रिगुणः स्वयम् ।
त्र्यष्टवर्षोऽष्टवर्षा वा धर्मे सीदति सत्वरम् ॥
क्रीतद्रव्येण या नारी न सा पत्नी विधीयते[११३] ॥
शुल्केन ये प्रयच्छन्ति सुतां लोको विमोहितः ॥
न सा दैवेन पित्र्येण दासीं तां कश्यपोऽब्रवीत्[११४] ॥
असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

---

आपस्तम्बः-

आषोडशादब्राह्मणस्यानात्यय आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद् वैश्यस्य यथा व्रतेषु समर्थः साद्यानि वक्ष्यामः ॥ आ.ध.सू. १/२७ ।

आश्वलायनगृह्यसूत्रे-

आ षोडशादब्राह्मणस्यनतीतः कालः । आ द्वाविंशात्क्षत्रियस्याचतुर्विंशा-द्वैश्यस्यात् ऊर्ध्वं पतितसावित्रीका भवन्ति । आ.गृ.सू. १/१९/६ ।

११३. क्रयक्रिता तु या नारी न सा पत्नी विधीयते ॥
- इति पराशरमाधवोक्तकाश्यपवचनमिति । प.मा. पृ.- ४८८ ।

११४. न स दैवेन सापिण्ड्ये दासीं तां काश्यपोऽब्रवीत् ।
- इति पराशरमाधवीये पाठः। प.मा. पृ.- ४८८ ।

याज्ञवल्क्यः-

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥

अस्यार्थः- मातृतः मातृसन्तानेन मातामहादिपिण्डेन सपिण्डेनापि पञ्चमादूर्ध्वमुद्बहेदित्यर्थः । एवं पितृतः पितृसन्तानेन पितामहादिपिण्डेन सपिण्डेनापि सप्तमादूर्ध्वमुद्बहेत् । [११५]कल्पतरौ-

असमानजातीयकन्याविषयमित्युक्तम् ।

वर्णसापत्न्यं मातामहकुलविषयमिति मदनपारिजातकारः[११६] ॥

यत्तु पैठीनसिः-

त्रीनतीत्य मातृतः पञ्चातीत्य च पितृत इति ॥

तदत्यन्तासम्भवपर इति विद्याकरः । दत्तपुत्रस्य विषयमेतत् । अस्यार्थः यस्य माता दत्तपुत्री तां यः प्रतिग्रहीता पुत्रत्वेन स्वीकरोति तत् कुलकमिति मदनपारिजातकारः । सापत्न्यमातुः सापिण्ड्येऽपि मातुलादिव्यवहारान् दर्शयति ।

[११७]सुमन्तुः- पितृपत्न्यः सर्वाः मातरः । तद् भ्रातरः मातुलाः । तद्दुहितरो भगिन्यः । तदपत्यानि भागिनेयानि । ताः सङ्करिण्यः तां सङ्कुल्यां नोद्बहेत् ।

याज्ञवल्क्यः-

[११८]अनन्यपूर्विकां कान्तामसपिण्डां[११९] यवीयसीम् ।

---

११५. अत्र च समानजातीये पञ्च, असमानजातीये त्रीनिति व्यवस्थितो विकल्पः ।
-इति कृ.कौ.गा.का. पाठः- पृ.- ९ ।

११६. तत्सवर्णसापत्न्यमातृकुलविषयमिति मुद्रितमदनपारिजाते पाठः- पृ.- १३९ ।

११७. पराशरमाधवीयस्याचारकाण्डे द्वितीयाध्याये- पृ.- ४६९ ।

११८. अनन्यपूर्विकामिति-
दानेनोपभोगेन वा पुरुषान्तराऽपरिगृहीतामिति
विज्ञानेश्वरः । मिताक्षरा- या.स्मृ. १/५२ ।

११९. असपिण्डामिति- समान एकः पिण्डो देहो यस्याः सा सपिण्डा न सपिण्डा असपिण्डा ताम् । सपिण्डा च एकशरीरावयवान्वयेन भवति । इति मिताक्षरा ।
-या.स्मृ. आ. अ. ५२ ।

अरोगिणीं [१२०]भ्रातृमतीमसमानार्षगोत्रजाम् ॥

आपस्तम्बः-

समानगोत्रप्रवरां तां कन्याम् अभ्युपगम्य च ।
तस्यामुत्पाद्य चाण्डालं ब्राह्मण्यादेव.हीयते ॥
विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ।
उत्सृज्यतां ततो भार्यां मातृवत् परिपालयेत् ॥

उत्सृजति= उपभोगत्यागं करोति ।

समानप्रवरस्वरूपञ्च बौधायनोप्याह-

एक एव ऋषिर्यावत् प्रवरेष्वनुवर्त्तते ।
तावत् समान गोत्रत्वं मृते भृग्वङ्गिरोगणात् ॥

समानगोत्रत्वं समानप्रवरत्वमित्यर्थः । भृग्वङ्गिरोगणेषु विशेषमाह संग्रहकारः-

पञ्चसु त्रिषु सामान्याद्विवाहात्रिषु द्वयोः ।
भृग्वङ्गिरो गणेष्वेव शेषेष्वेकोऽपि कारयेत् ॥

पञ्चार्षाणां ऋषित्रयानुवृत्तौ न विधेयो विवाहः । त्र्यार्षाणां ऋषिद्वयानुवृत्तौ शेषेषु एकानुवृत्तावपि न विवाहः ।

॥ इति विश्वनाथविरचितः स्मृतिसारसंग्रहः ॥

***

---

१२०. असमानार्षगोत्रजाम् इति-

ऋषेरिदमार्षं नाम प्रवर इत्यर्थः । गोत्रं वंशपरम्पराप्रसिद्धम् । आर्षं च गोत्रञ्च आर्षगोत्रे, समाने आर्षगोत्रे यस्यासौ समानार्षगोत्रस्तस्माज्जाता समानार्षगोत्रजा, न समानार्षगोत्रजा असमानार्षगोत्रजा ताम् । गोत्रप्रवरौ च पृथक् पृथक् पर्युदासे निमित्तम् । तेनासमानार्षजामसमानगोत्रजामित्यर्थः । तथा च असमानप्रवरैर्विवाहः (गो.स्मृ.- ४/१) इति मिताक्षरा- या.स्मृ. १/५३ ।